निरीक्षमाणस्य सुताननं शुभं नृपस्य गात्रात्पुलका निरन्तरम् ।
निरीयुरन्तःप्रमदाय सर्पते ध्रुवं समन्तादवकाशदित्सया ॥ 73

निशम्य कुन्त्याः सुतजन्म सौबली मयैष गर्भस्तु चिराद्धृतो महान् ।
न जायते जात्विति वोढुमक्षमा[1] सधैर्यमात्मोदरमाहताश्मना ॥ 74

क्षणेन पेशीं पतितां सशोणितां ददर्श पाराशरिरागतस्तदा ।
पतिः प्रभाणामुषसीव विश्लथां द्युगर्भतस्सान्ध्यपयोदलेखिकाम् ॥ 75

स मांसकोशं शतधा विभज्य तं निधाय कुम्भेषु भृतेषु सर्पिषा ।
विभक्तशेषं पिशितं कराहृतं परत्र कुर्वन्कलशे वचोऽब्रवीत् ॥ 76

अलं शुचा राज्ञि न मे वृथा वरः[2] शतं सुतास्ते दुहिता च काचन ।
विभिद्य पूर्णावयवा घटानिमान्विनिर्गमिष्यन्ति विसृत्वरौजसः ॥ 77

इतीदमाख्याय तिरोहिते मुनौ ननन्द गान्धारनरेन्द्रनन्दिनी ।
ररक्ष गूढं कलशान्निजात्मजानवाप्तुमण्डानि यथा महोरगी ॥ 78

पृथा निदेशान्निजभर्तुरेकदा समाह्वयन्मन्त्रबलेन मारुतम् ।
स चागतस्संभृतपुष्पसौरभो लतामिवैतां स्पृशति स्म माधवीम् ॥ 79

गते तु तस्मिन्मरुति स्वमास्पदं शुभे मुहूर्ते दिनमध्यगे रवौ ।
असूत भीमं क्षणदाचरान्तकं [3]–पृथा सुतं–[3] मारुतिमञ्जना यथा ॥ 80

मुमोच काणद्रुमकोरकच्छलात्सुनोदयेन प्रमदाश्रु मारुतः ।
प्रियस्सुहृत्तस्य च वेदिषु ज्वलन्ननर्त हर्षादिव वह्निरुच्छिखः ॥ 81

अलब्ध यत्राहनि जन्म मारुतिस्ततस्तु पूर्वत्र निशीथिनीमुखे ।
अजायत व्यायतलोचनोत्पलः सुयोधनो मानधनाग्रतस्सरः ॥ 82

---

1. सोढु० A; Cv; Ptv. 2. वचः A; Ptv.

3–3. महाबलं A.

तदीयजन्मोत्सवतूर्यनिस्वनाः[1] शिवारुतैरन्तरयाम्बभूविरे ।
असृग्भिरौत्पातिकमभ्रमाप्लुतांश्चकार पौरान्प्रमदाश्रुवर्षिणः ॥ 83

शरारुवृत्ताश्च शतेन वासरैः क्रमादजायन्त सुयोधनानुजाः ।
अभूच्च तेषामनवद्यजन्मनां यवीयसी काचन दुश्शलाभिधा ॥ 84

विकामलक्ष्म्येव तया परिष्कृतैः [2]असौ कुमारैः[2] सुबलस्य कन्यका ।
आमुक्तपार्श्वस्थितिरात्मजैर्बभौ शतेन पत्रैरिव पद्मकर्णिका ॥ 85

निजेन भर्त्रा पृथया नियुक्तया महीयसा मन्त्रसमाधिना स्मृतः ।
दिवस्पतिर्जह्नुजयेव दिग्गजस्तया च संगम्य यथागतं ययौ ॥ 86

अथोदयं जग्मुषि मासि फाल्गुने दिने शुचिन्युत्तरफल्गुनीयुते ।
अजीजनद्वीरमसौ यदर्जुनं जगत्त्रये तेन स फल्गुनः स्मृतः ॥ 87

प्रकीर्णमन्दारपरागवृष्टिभिः[3] प्रमोदनृत्तोचिततूर्यनिःस्वनैः ।
महर्षयः सङ्कुलमप्सरोगणैरमंसत स्वः शतशृङ्गमागताः ॥ 88

अनुत्तमं मन्त्रमपास्तविग्रहा ददौ स पत्न्यै दयिताज्ञया[4] पृथा ।
सकृत्प्रयुक्तेन[5] च तेन सा पुनः सुतौ यमौ लिप्सुरकाङ्क्षदश्विनौ ॥ 89

क्षणेन तौ तत्र नृपावरोधने समेत्य पुत्रौ जनयांबभूवतुः ।
कुलस्य पूरोर्नकुलं विभूषणं महानुभावं सहदेवमप्युभौ ॥ 90

सुतैरुदारैस्त्रिदिवो यथा द्रुमैः प्रसूनधन्वेव शरैर्मनोहरैः ।
रराज भूतैरिव पद्मसंभवो महद्भिरभिर्नृपतिस्स पञ्चभिः ॥ 91

---

1. ०जन्मोदित० Ptv.
2–2. समौकुमार्यैः A; Ptv.
3. ०नुष्टिभिः Ptv.
4. पतिशासनात् Ptv.
5. ०प्रयोज्येन A; Ptv.

अक्लृप्तधात्र्यङ्गुलिपल्लवग्रहाः क्रमादनाकर्णितवेत्रिचाटवः ।
मणिस्थलीचङ्क्रमणोचिताङ्घ्रयः पदान्यकुर्वन्नुटजाङ्गणेषु ते ॥ 92

तपोधनानामुपलालितास्सुतै[1]रितस्ततः कल्पितपांसुकेलयः ।
वितेनिरे सिंहसटाविकर्षणं तपोवनस्था कलभा[2] इवाभियः ॥ 93

अथोपनीतैः श्रुतिपारदृश्विभिः[3] विशिष्टविद्याधिगमोज्ज्वलैश्च तैः ।
न केवलं संततिरेव भारती मता च धन्याऽजनि तान्प्रशंसताम् ॥ 94

क्रमेण तेषामुपपादयन्मुदं मधुव्रतानामिव लोकचक्षुषाम् ।
सरोरुहाणीव नवानि सौरभं प्रसाधयामास वपूंषि यौवनम् ॥ 95

भुजैः सह द्राघिमसम्पदं दधौ विशालमालक्ष्यत वक्षसा समम् ।
निकाममेषां सह मन्द्रवृत्तिना स्वरेण च स्निग्धमजायतेक्षणम् ॥ 96

कुहूमुखानां कुशलोदयस्ततो मदोद्गमो मन्मथगन्धहस्तिनः ।
प्रदायसां वैजननो नभस्वतां वनेषु मासः पदमादधे मधुः ॥ 97

समीरणोत्था नवचूतरेणवो वसन्तलक्ष्मीपटवासपांसवः ।
प्रपेदिरे मन्मथमन्त्रवादिनो वियोगिसम्मोहनचूर्णमुष्टिताम् ॥ 98

प्रसूनगन्धेन समस्तवीरुधां प्रसर्पता वासितदिङ्मुखो मधुः ।
न मालतीसौरभशोभितोऽभवद्भवन्ति के वा भुवि पूर्णसम्पदः ॥ 99

समीरणेन ह्रियमाणमुन्मिषद्रजःकणं पुष्पमशोकशाखिनः ।
प्रसूनबाणेन रुषा वियोगिषु प्रयुक्तमाग्नेयमिवास्त्रमाबभौ ॥ 100

मधुद्रवस्वेदकणानुषङ्गिणी नवोद्गमा केसरकुट्मलावलिः ।
वसन्तसंपर्कवशादुदञ्चितामुवाह रोमाञ्चरुचिं वनश्रियः ॥ 101

1. ०लालितैः स्सुतैः A. 2. शरभाः A; Ptv.
3. श्रुत० Ptv.

अथानिलैर्दक्षिणदिङ्मुखागतैः कृतान्तदूतैरिव कृष्टमानसः ।
महीपतिर्माधवलब्धयौवनं स मद्रपुत्रीसहितो वनं ययौ ॥ 102

सुशीतलैः केसरशीधुशीकरैरतिप्रगल्भैः[1] कलकण्ठपञ्चमैः ।
स्मरो वसन्तश्रियमस्य पश्यतश्चिराय सुप्तो मनसि व्यबुध्यत ॥ 103

प्रकीर्णपुष्पोच्चयगन्धगर्भितां[2] स माधवीमण्टपिकामुपेयिवान् ।
तपस्विशापस्मरणात्प्रवेपिनीं बलादगृह्णादबलां स्मरातुरः ॥ 104

सुखेन पाण्डुः सुरतान्तजन्मना परासुभावेन च मीलितेक्षणः ।
प्रसूनतल्पे निपपात तत्क्षणं पृषत्कशय्यामदृशे मनोभुवः ॥ 105

तथागतं[3] वीक्ष्य पतिं तलोदरी विधाय सद्यः परिवीतवाससम् ।
नवेन शोकेन भयेन चाकुला निपत्य चक्रन्द महीतले चिरम्[4] ॥ 106

निशम्य तत्क्रन्दितमागता वनं क्षणेन पुत्रैस्सह तापमान्वितैः ।
निकुञ्जगर्भे कुरुवीरकुञ्जरं[5] पृथा विधिव्याधहतं व्यलोकयत् ॥ 107

[6]-किमेतदित्याकुललोचना हृदि-[6] स्तनद्वयोत्कम्पिनि कुर्वती करौ ।
निपत्य तस्योपरि गाढविह्वला रुरोद पुत्राश्च युधिष्ठिरादयः ॥ 108

निरुद्धबाष्पे रुदतो नृपात्मजानभीक्ष्णमाश्वासयति द्विजव्रजे ।
प्रवर्तयन्त्यश्रुजलानि पादयोर्निपत्य माद्री निजगाद यादवीम् ॥ 109

दिवं प्रपन्नः पतिरेष मत्कृते विलम्बनं मे सहते न तु क्षणम् ।
तदन्तिकं प्रेषय साध्वि मां द्रुतं सुताननाथानिह रक्षितुं स्थिता ॥ 110

---

1. केतकगर्भशीकरैः॰ Ptv.
2. ॰गर्भितांतरां Ptv.
3. तथाविधं Ptv.
4. भृशम् Ptv.
5. कुरुराज॰ Ptv.
6-6. ॰इत्यार्तरवा पृथा Ptv, ॰इत्याकुलचेतना Ptv.

विचिन्त्य कार्यस्य गतिं गरीयसीं मृतेः पृथायै विनिवृत्तचेतसे ।
निरुद्धबाष्पप्रसरा ददावसौ यमौ रुदन्तावनुयास्यती पतिम् ॥ 111

अतिप्रवीणैः पितृमेधकर्मणि द्विजातिवर्यैः सह काश्यपादिभिः ।
युधिष्ठिरो धीरमनाः स्वयं पितुः समापयत्तत्समयोचिताः क्रियाः ॥ 112

प्रणम्य माद्री प्रयता तपोधनान्[1] गिरस्तदीयाः प्रतिगृह्णती शुभाः ।
क्षमस्व शाठ्यं मयि कल्पसर्माप्र्यया ममेति कुन्त्यै परिकल्पिताञ्जलिः ॥ 113

सुतान् परिष्वज्य धृताश्रुशीकरे[2] प्रमृज्य नेत्रे वदती[3] जयाशिषः ।
प्रदक्षिणीकृत्य चितागतं पतिं शुचिस्मिता प्राविशदाशुशुक्षणिम् ॥ 114

नृपस्य पत्नीसहितस्य पाण्डवैः समापिते तत्र परेतकर्मणि ।
अनैषुरेभिस्सह दुःखितां पृथां पुरं कुरूणां शतशृङ्गतापसाः ॥ 115

चिराय पाण्डोर्निधनेन तादृशो विजृम्भमाणां शुचमम्बिकासुतः ।
तदात्मजानामुपलालनोत्सवैः[4] जहौ पितृव्यस्य च दर्शनेन ते ॥ 116

सततममितसत्त्वः पाण्डवेषु द्वितीयः
पथि पथि मृदुपांसौ क्रीडतो राजधान्याः ।
व्यहरत शतसंख्यान्पीडयन्धार्तराष्ट्रान्
सुत इव विनतायाः शैशवे काद्रवेयान् ॥ 117

## इत्यगस्त्यपण्डितकृतौ[5] बालभारते महाकाव्ये
## द्वितीयस्सर्गः समाप्तः ॥

---

1. प्रयतांस्तपोधनात् A; Ptv.
2. धृताश्रुणीकरात् Ptv.
3. ददती A; Ptv.
4. तमात्म० Pt.
5. ०कवि० A.

# अथ तृतीयः सर्गः

जातु जह्नुदुहितुर्जले चिरं पद्मगन्धिनि विहृत्य निर्गतैः ।
पौरवैः पटगृहेषु भूषितैर्भुक्तवद्भिरुषितं तटे सुखम् ॥ 1

तत्र वारिविहृतिश्रमालसं निद्रया परवशं वृकोदरम् ।
सिन्धुशीकरभृतः सिषेविरे मन्थरा दिनविरामवायवः ॥ 2

आयताभिरहितं[1] सुयोधनस्तं सुषुप्तमवबध्य वल्लिभिः ।
भोगिनद्धमिव मन्दरं हरिः सिन्धुगर्भपयसि न्यपातयत् ॥ 3

स प्रबुध्य सरितः समुत्थितश्छिन्नबन्धनशतः स्वपन्[2] पुनः ।
विद्विषा कुरुसुतेन मोचितैरुद्विषाग्निभिरदश्यतोरगैः ॥ 4

तान्स्फुरद्दशनकोटिभीषणानुत्फणानदयदष्टमर्मणः ।
तत्क्षणं स्वपनविघ्नकारिणो मत्कुणानिव पिपेष मारुतिः ॥ 5

स्वेन हन्तुमपरेद्युरुत्सुको वत्सलः किल सजग्धिमाचरन् ।
दुर्मतिः कवलगोपितं विषं मारुतात्मजममावभोजयत् ॥ 6

दुस्सहेन गरलेन विह्वलं गाढरज्जुनहनं स तं शठः[3] ।
शातशूलवति जाह्नवीपयस्याप्तकिङ्करशतैरपातयत् ॥ 7

शैलवद्गुरुतरो बलाद्द्रिधेः शूलकोटिभिरविक्षतः पतन् ।
आससाद विषलुप्तचेतनो नागलोकमनिलस्य नन्दनः ॥ 8

---

1. आयताभिरभितः Ptv. 2. श्वसन् A.
3. ततः A.

तत्र सर्पशिशुभिर्विहारिभिस्तस्य दष्टवपुषः पुरातनम् ।
स्थावरं सपदि जङ्गमेन तन्नूतनेन विषमभ्यभूयत ॥ 9

लब्धसंज्ञमवमुक्तबन्धनं तं दशङ्कुजगदर्पहारिणम् ।
वायुसूनुमवगम्य[1] वासुकिः प्रीतिमाननयदात्मनो गृहम् ॥ 10

तत्र मारुतहितं चिकीर्षतः शासनेन पवनाशनप्रभोः ।
आपिबत्स दशकुण्डसंभृतं[2] कुञ्जरायुतबलावहं रसम् ॥ 11

तृप्तिमानुरगदर्शितं गतस्तल्पमष्टदिवसानि संविशन् ।
सिन्धुरोधसि निपीतपाथसः साम्यमाप निभृतस्य वार्मुचः ॥ 12

तावदम्भसि निपात्य मारुतिं सौबलेन सह कौरवात्मजः ।
पूर्वमाश्रितजनाभिनन्दितां प्रीतिमाप महतीं ततः पुरीम ॥ 13

यादवी च तनयं सहेतरैर्वामितेव कलभं विचिन्वती ।
अभ्रमत्प्रतिदिनं पुराद्बहिः काननेषु सरसीषु सिन्धुषु ॥ 14

शङ्किता सुतवधं सुयोधनाद्विह्वला विदुरभाषितामृतैः ।
सा निदाघमिहिरातपाहता द्यौरिवेन्दुकिरणैरुदश्वसत् ॥ 15

स प्रबुध्य नवमेऽह्नि सारवान्वासुकिप्रहितभोगिधारितः[3] ।
निर्जगाम तरसा रसातलाज्जाह्नवीजलपथेन पाण्डवः ॥ 16

तान्विसृज्य वहनालसैः फणैः पन्नगान्प्रणमतो गतः पुरम् ।
भ्रातृपौरधृतराष्ट्रजन्मनां हर्षविस्मयशुचश्चकार सः ॥ 17

लब्धविद्यमथ गौतमात्पितुर्जातु शन्तनुसुतः कृपं कृती ।
पाण्डुसूनुधृतराष्ट्रजन्मनामस्त्रशिक्षणविधौ गुरुं व्यधात् ॥ 18

---

1. ०उपगम्य A. 2. ०कुंभ० A; Ptv.
3. ०वाहनः Ptv.

तेन तेषु धनुषि प्रगल्भतां लम्भितेष्वपि सरित्सुतः क्षितौ ।
अन्वियेष गुरुमन्यमुच्छ्रितं वस्तु वाञ्छति गुणोत्तरं जनः ॥ 19

पौरवः परशुलक्षणान्मुनेः द्रोणमात्तसकलास्त्रसंपदम् ।
आनिनीषुरभवन्महौजसं सोऽपि हास्तिनपुरं तदाऽऽययौ ॥ 20

भार्यया सहकुमारयाऽन्वितो विक्रमानुगतयेव विद्यया ।
सत्कृतो विधिवदापगासुतं कुम्भयोनिरिदमाह संसदि ॥ 21

अग्निवेशमृषिमस्त्रलब्धये प्रश्रितः परिचरन्मया सह ।
बाल्य एव दृढबद्धसौहृदो मां प्रति द्रुपद एवमब्रवीत् ॥ 22

भद्र मत्पितुरनन्तरं महीं शासतो मम समुद्रमेखलाम् ।
अर्धराज्यपरिभोगभाजनं[1] त्वां विधास्य इति सख्यमीदृशम् ॥ 23

सोमके धृतभुजोजसि क्रमात्पैतृकं सुहृदि संश्रिते पदम् ।
तत्प्रकाशमगमं न निस्पृहः सेवयाऽनुमितधर्मविप्लवः ॥ 24

मुग्धमेनमथ दुग्धकांक्षिणं पीतपिष्टरसहृष्टमात्मजम्[2] ।
वीक्ष्य दुर्गततया गरीयसीमासदत्कृपयवीयसी शुचम् ॥ 25

स्वीकृता तदनु गर्हिता मया दैन्यवृत्तिजननी च याचना ।
अप्यकृत्यविधिना विपश्चितः कुर्वते खलु कुटुम्बरक्षणम् ॥ 26

यज्ञसेनमुपगम्य संसदि स्वेन मां प्रियसखं न्यवेदयम् ।
सोऽपि कोपकलुषीकृताननः सोपहासमिदमुद्धतोऽवदत् ॥ 27

दुर्गतस्य तव च द्विजन्मनः [3-]क्षत्रियस्य मम संपदान्निधेः[-3] ।
काचरत्नघटनोपमं द्वयोः सख्यमेतदुपपद्यते कुतः ॥ 28

---

1. ०भागिनं A; Ptv. 2. मानसम् A; Ptv.
3-3. भूभुजश्च मम बाहु जन्मनः A; Cv; Ptv.

इत्थमप्रियगिराऽवमानितः त्वत्सकाशमयमागतो जनः ।
नप्तृभिस्तव महास्त्रपारगैः पूरयिष्यति निजं मनोरथम् ॥ 29

तन्निशम्य वचनं प्रमोदवान्कुम्भजाय गुरवे कुरूद्वहः ।
प्रश्रितः प्रथममर्थमूर्जितं[1] पौत्रवर्गमसमं[2] ददौ ततः ॥ 30

रेणुकातनयपादरेणुभिस्तेन पूतशिरसा नृपात्मजाः ।
आयुधेषु विधिवद्विनिन्यिरे धन्विनश्च भुजदर्पमात्मनः[3] ॥ 31

भूतलैकतिलकेन भूष्णुना[4] मातरिश्वतनयानुजन्मना ।
कृष्यते स्म गुणवच्छरासनं चित्तमस्य च गुरोरहर्निशम् ॥ 32

एकलव्यमथ ज्ञात्वनुज्ञया शिक्षितास्त्रमधिकं धनुष्यसौ ।
दक्षिणार्थहृतदक्षिणाङ्गुलिः फल्गुनस्य सममेव तं व्यधात् ॥ 33

स्थापितं कलशजेन पादपे लक्षितं शिरसि केवलं नरः ।
पत्रिणा कृतकभासमच्छिनन्मत्सरेण सममन्यधन्विनाम्[5] ॥ 34

स्नातुमप्सु गुरुरेकदा वसन् ग्राहमात्तचरणं मतः शरैः ।
अर्जुनादलभताधिकं मुदं दिव्यमस्त्रमपरं ततश्च सः ॥ 35

आप रङ्गमर्थशिल्पिनिर्मितं क्लृप्तमङ्गलवलिं कृती गुरुः ।
राजपुत्रनिवहेन संयुतस्तस्य दर्शयितुमस्त्रकौशलम् ॥ 36

प्रेक्षकैर्विविधमन्ववर्तिभिः पौरजानपदभूमिभर्तृभिः ।
रङ्गसद्मनिबिडं तदाभवन्निर्जरैरपि विमानगैर्नभः ॥ 37

तत्र ते गुरुकृपाहृणाकृतो धर्मनन्दनमुखा धनुर्भृतः ।
स्थूलसूक्ष्मचलनिश्चलादिकं लक्ष्यमाशु विविधुः[6] शिलीमुखैः ॥ 38

---

1. प्रथममर्जितं धनुः A.
2. ०अनघं A; Ptv.
3. भुवि०. Ptv.
4. जिष्णुना A; Ptv.
5. सममस्त्रकौशलम् A; सममेव० Ptv.
6. बिभिदुः Ptv.

आयुधेषु कतिचित्परिश्रमं खड्गमुद्गरमुखेष्वदर्शयन् ।
चर्यया च रथहस्तिवाजिनां पश्यतां कतिचिदादधुर्मुदम् ॥ 39

उद्धृतोद्धटगदाभयङ्करौ[1] मारुतात्मजसुयोधनौ ततः ।
रङ्गभूमिमवतेरतुः क्षणादूढसालविटपाविव द्विपौ ॥ 40

मण्डलेषु विविधेषु वल्गतोर्घट्टितोभयगदाग्रयोर्मिथः ।
क्रुद्धयोर्गहनमाहवोद्यमं द्रोणसूनुरुभयोन्र्यवारयत् ॥ 41

आज्ञया तदनु कुम्भजन्मनस्तत्पदप्रणतिपूतमौलिना ।
धन्विना कवचिना निषङ्गिणा रङ्गभूरलमकारि जिष्णुना ॥ 42

वह्निवारिधरहस्तिकेसरिव्यालतार्क्ष्यतिमिरार्कदैवतम् ।
अस्त्रजातमभिजातविक्रमस्संसदि प्रकटयाम्बभूव सः ॥ 43

सिंहसंहननतामुपेयिवान् सिंहनादमुखराष्टदिङ्मुखः ।
रङ्गसद्म रविसूनुरुल्लसन् प्राप चापनिगमाब्धिपारगः ॥ 44

अर्चितेन गुरुणानुमोदितो धारयन्धनुरधिज्यतां गतम् ।
अद्भुतं व्यधित यद्यदर्जुनस्तत्तदभ्यधिकमाततान सः ॥ 45

अस्त्रसंपदमुदीक्ष्य तद्गतां तत्र संसदि विसिष्मिये जनः ।
व्रीडितोऽजनि सुतो बिडौजसः सानुजस्तु मुमुदे सुयोधनः ॥ 46

द्वन्द्वयुद्धमधुना करोम्यहं जिष्णुनेति कथयन्तमादृतः[2] ।
आत्मनस्सुहृदमंशुमत्सुतं स्वीचकार धृतराष्ट्रनन्दनः ॥ 47

अन्तरं स्वपरयोरजानतां जल्पतां जगति या गतिर्नृणाम् ।
तामिषुर्नयति मे विकत्थनं त्वामिति द्विषमुवाच फल्गुनः ॥ 48

---

1. उद्यतो० A; Ptv.    2. ०आदरात् Ptv.

तिष्ठ पार्थ समिताविह स्थिरो मामकेन दलितेन पत्रिणा ।
त्वच्छिरस्सरसिजेन कल्पयाम्याशु रङ्गगृहदेवताबलिम् ॥ 49

इत्युदीर्य गिरमाहवोद्यतं गौतमस्तपनसूनुमब्रवीत् ।
सूतपुत्र भवता न योत्स्यते पूरुवंशमणिरेष पूरुषः ॥ 50

व्रीडिते सुहृदि कौरवः कृपं प्राह नैवमभिधातुमर्हसि ।
विष्टपत्रितयविश्रुतौजसामुद्भवो न महतां विगर्हितः ॥ 51

पूरुषः किल पुरा पुरातनः स्तम्भतः समुदपादि तादृशः ।
क्रौञ्चविन्ध्यमथनाविवापरौ त्वं गुरुश्च शरकुम्भसंभवौ ॥ 52

ऊचिवानिति स तत्र मन्त्रवित्कर्णमात्मनिवेशितं स्वयम् ।
शातकुम्भकलशाम्बुभिः शुभैरभ्यषिञ्चदमुमङ्गभूपतिम् ॥ 53

[1]-राज्यलाभसुखितो रवेः सुतः-[1] सख्यलाभमुदितश्च कौरवः ।
तौ परस्परमहोपकारिणौ पाण्डवान्न गणयाम्बभूवतुः ॥ 54

इत्थमस्त्रजलराशिपारगान् जातु राजतनयानयाचत ।
अर्पणं हठहृतस्य संयुगे पार्षतस्य गुरुदक्षिणां गुरुः ॥ 55

तद्वचः शिरसि ते शिरस्त्रवत् सन्निवेश्य रथिनो धनुर्भृतः ।
पांसुभिः पटहनिस्वनैश्च खं रुन्धता सह बलेन निर्ययुः ॥ 56

चोदितं कलशजन्मना ततः सैन्यमुग्रमरुधत्पुरं द्विषः ।
प्रेरितं परिवहेन वायुना मेघजालमिव मेरुमेखलाम् ॥ 57

पौरवद्विरदबृंहितश्रवात्पार्षतस्य[2] बलमुद्धतं पुरात् ।
निर्ययौ निशमिताभ्रनिस्वनं सिंहवृन्दमिव सह्यकन्दरात् ॥ 58

---

1–1. ०मुदितः सुतो रवेः A.　　2. कौरव० A.

आरचय्य सवनान्तसंभृतं स्वेन पुत्रमयमोजसा हविः ।
तत्स पाययितुमन्तिकस्थितामाजुहाव यजमानगेहिनीम ॥ 69

जातभीतिमुपसर्पणे मुनिः किं त्वयेति महिषीं रुषावदत् ।
हव्यमाहितगुणं महातपाः सम्भृतार्चिषि जुहाव पावके ॥ **70**

उद्भवन्तमुदितार्चिषस्ततो भानुमन्तमिव हेमभूभृतः ।
पङ्कजैरिव कुमारमीक्षणैर्विस्मयेन विकचैः पपौ जनः ॥ 71

अङ्गदी मकुटवान्सकुण्डली वर्मितः स्वनितसज्यकार्मुकः ।
आरुरोह रथमुल्लसन्नदन्[1] पुत्रिणां च पृषदात्मजो धुरम् ॥ 72

शङ्खतूर्यतुमुलस्वनैरयं पूर्यमाणगगनं ससोमकः ।
पर्यवर्तत पुरं ध्वजाकुलं तत्प्रवृत्तिरपि विष्टपत्रयम् ॥ 73

तेन याजमुनिना हुतं पुनः प्राप्य हव्यमभिजातमुच्छिखात् ।
शुष्मणस्समुदगामि[2] कन्यया रक्तपङ्कजवनादिव श्रिया ॥ 74

कल्पितार्जुनविकासयाऽनया प्रावृषेव नवपद्मकाननम् ।
क्षत्रमुद्धतमुपैष्यति क्षयं कृष्णयेति दिवि वागजृम्भत ॥ 75

जातयोस्स्सपदि जातवेदसः पुत्रयोरधिगमेन पार्षतः ।
फल्गुनान्मुदममंस्त भाविनीं द्रोणतश्च विजहौ महद्भयम् ॥ 76

आत्मशत्रुमपि शिष्यतां गतं सोमकेन्द्रतनयं महायशाः[3] ।
आततान गुरुरस्त्रपारगं जीवितादपि यशस्सतां प्रियम ॥ 77

यावराज्यविहिताभिषेचनं कौरवक्षितिपतिर्युधिष्ठिरम्[4] ।
स्निग्धवर्णमधिकं सुदर्शनं चक्षुरागतममन्यतात्मनः ॥ 78

---

1. अयं A.  2. ०समुदपादि Pcv.
3. महाशयः A; Cv; Pvt.  4. पौरव० A.

ऋद्धिमस्य गुणशालिनोऽन्वहं नामहिष्ट धृतराष्ट्रनन्दनः ।
ज्ञातिमुच्छ्रयिणमाह दुर्हृदामाशुशुक्षणिमनिन्धनं जनः ॥ 79

दुर्मनाः पितरमब्रवीन्मिथस्तात संप्रति जनो युधिष्ठिरम् ।
श्लाघते मधुरवाङ्महोदयं चैत्रमासमिव कोकिलव्रजः ॥ 80

कौरवं यदि भजेदयं[1] पदं सर्व एव नियतं हता वयम् ।
तन्न संस्पृशति नो यथा विपन्नीतिमाशु कुरुतात्तथा भवान् ॥ 81

प्रत्युवाच सुतमम्बिकासुतस्तात नैवमभिधातुमर्हसि ।
एष पाण्डुरिव तत्सुतो गुणी दृश्यते मयि दृढं हि भक्तिमान् ॥ 82

स्निग्धबन्धुरयमादृतप्रजः क्षेप्तुमद्य भवता न शक्यते ।
भेदबुद्धिमवधूय दुर्मते पाण्डुसूनुषु भजस्व साधुताम् ॥ 83

तं स चाह सरिदात्मजो गुरुस्तत्सुतस्स च तदीयमातुलः ।
स्निग्धभावमकृतप्रवृत्तयः कल्पयन्ति मयि कर्णबान्धवे ॥ 84

तत्सहायरहितः पृथासुतः कर्तुमस्मदभिषङ्गमक्षमः ।
शासनेन तव वारणावते सानुजो यदि वसेद्भिदा कुतः ॥ 85

वासनत्र नगरे करोति चेत्सङ्गतो भवदुपाश्रयैर्जनैः ।
रूढमूल इव पादपो महानुद्धृतेरविषयो भविष्यति ॥ 86

ईदृशेन वचसा दुरात्मनः[2-] क्षोभितं कथमपि[-2] क्षमापतेः ।
स्वच्छतां रहयति[3] स मानसं हस्तिनेव लुलितं ह्रदोदकम् ॥ 87

जातु धर्मजमुवाच भूपतिर्वत्स पुण्यशतलभ्यदर्शनः[4] ।
वारणावतमवाप्य वीक्ष्यतां श्लाघितो जगति शङ्करोत्सवः ॥ 88

---

1. ०इदं A. 2–2. क्षोभमाप हृदयं Ptv.
3. न भजति Ptv; उपगतं स्वतोबलात् Ptv
4. ०दर्शनं Ptv.

वस्तुमस्ति[1] यदि तत्र ते रुचिः कारिते महति मन्दिरे वसन्।
शाधि दक्षिणभुजेन मानुजो वारिराशिरशनां वसुन्धराम्॥ 89

इति पितुरुपलभ्य शासनं
विदिततदाशयविक्रियो विभुः।
उदचलदभिवारणावतं
सममनुजैः प्रथमो मनस्विनाम्॥ 90

इत्यगस्त्यपण्डितकृतौ[2] बालभारते महाकाव्ये तृतीयस्सर्गः

1. अत्र A. 2. Pt.

# अथ चतुर्थस्सर्गः

कौरवस्य सचिवः पुरोचनः प्रस्थितः प्रथममेव तत्पुरम् ।
वह्निना शमयितुं पृथासुतानाशु जातुषमकारयद्गृहम् ॥ 1

वारणावतमुपागतः पुरं पौरलोचनशशी युधिष्ठिरः ।
सद्म दुष्टसचिवेन दर्शितं सम्भृतोपकरणं तदाविशत् ॥ 2

भोज्यवस्तुषु विषं विधास्यतो वासवेश्मनि च जातवेदसम् ।
क्षत्तृराप्तवचसा पुरोचनात्पाण्डवा विपदमाशशङ्किरे ॥ 3

तेन यद्यदुपनीतमन्वहं भूषणांशुकविलेपनादिकम् ।
धारयद्भिरतिगूढमिङ्गितं[1] तत्तदेभिरपरीक्ष्य[2] नाददे ॥ 4

चामराणि मृगयापदेशतः काननेषु नयति स्म पौरवः ।
तेन सर्पवदधिष्ठिते गृहे जाग्रदेव रजनीश्च सानुजः ॥ 5

जातु निद्रितपुरोचने गृहे मारुतिर्निशि निधाय पावकम् ।
भ्रातृमातृसहितस्सुरङ्गया निर्ययौ विदुरभृत्यक्लृप्तया ॥ 6

ज्वालजालविषये पुरोचने पार्थविद्विषि भृशं प्रहृष्यतः ।
अट्टहास इव जातवेदसः शुश्रुवे झटिति दाहनिस्वनः ॥ 7

या पुरोचनगिरा गरं फले दित्सुराश्रितवती चिरं पृथाम् ।
सा च तत्र शयिता वनेचरी पञ्चभिस्सह सुतैरदह्यत ॥ 8

---

1. ०उपगूढ० A. 2. ०अभिवीक्ष्य A.

प्रातरेत्य पुरवर्तिनो जनाः भस्मनिह्नुतबिलानने गृहे ।
वीक्ष्य दग्धवपुषं वनेचरीं सात्मजां यदुसुताममंसत ॥ 9

तां प्रवृत्तिमुपलभ्य शोचतो नागसाह्वयपुराधिवासिनः ।
उद्ययाविव जनस्य मानसे निर्वृतो जतुनिकेतनानलः ॥ 10

पार्थनाशमुदिता नृपात्मजा बाष्पमूहुरभिनीतमन्यवः ।
आतपक्वथितपाथसो बहिः शीतगर्भसलिला इव ह्रदाः ॥ 11

निर्गता बिलपथात्तु मारुतिर्भ्रातृभिस्सह वहन्स्वमातरम् ।
ऊरुपातितमर्मापपादपो गन्धनाग इव काननं ययौ ॥ 12

तत्र तान् गमनवेगविह्वलानंसबाहुयुगलावतारितान् ।
स्वापमुद्रितदृशस्सरस्तटे तिष्ठति स्म परिपालयन्नयम् ॥ 13

कापि योषिदथ रूपशालिना पाण्डवेन ददृशे परिष्कृता ।
आगतेव वनमस्तकण्टकं स्वेन कारयितुमस्य देवता ॥ 14

अभ्यवाच्च तमुपेत्य कुर्वती दन्तरश्मिदलितं निशातमः ।
कस्त्वमङ्गक इमे तवाग्रतः स्वापयन्ते किमिह दारुणे वने ॥ 15

अस्ति कश्चन हिडिम्ब इत्यमुं राक्षसो गहनगर्भमाश्रितः ।
मर्त्यगन्धमुदितेन तेन वः प्रेषितास्मि हनने यवीयसी ॥ 16

पुष्पसायकविकासकारिणो मूर्तिभाज इव कानने मधोः ।
जायते हि तव सन्निधानतो योऽधिकोऽपि मयि रागपल्लवः ॥ 17

उज्झितोऽप्रवपुर्गदृशाकृतिस्त्वामधोऽग्रतिरभ्ययामिषम ।
पङ्क्तिलोघरहिता घनात्यये निम्नगेव विरलाम्बुरम्बुधिम् ॥ 18

आपतिष्यति विलम्बनेन मे रोषणस्स पुरुषादपुङ्गवः ।
रोमहर्षणि करे गृहाणमामुन्नयामि भवता समं नभः ॥ 19

सस्मितः पवनसूनुरब्रवीदग्रजोऽयमविवाहमङ्गलः ।
तेन सुभ्रु परिवित्तता मम त्वत्परिग्रहणकर्मणा भवेत् ॥ 20

एभिरत्र विपिनक्षिनाविमां भ्रातृभिस्सह विहाय मातरम् ।
कुत्रचित्कुणपभोजिनो भयान्मादृशः कथमिव व्रजेज्जनः ॥ 21

मुग्धबुद्धिरसि कस्स्त्रिया पुमान् रक्ष्यते परभयादविक्लवः ।
द्रक्ष्यसि त्वमिह ते सहोदरं युद्धकर्मणि वृकोदरं च माम् ॥ 22

रोषवह्निकणवर्षिलोचनं भीषणभ्रुकुटिविभ्रदाननम् ।
सृक्किणी रसनया लिहन्मुहुः प्रादुरास पुरतो निशाचरः ॥ 23

प्राङ्नृणामसृजि कामुकाधुना लक्ष्यसे यदिह पुण्यकामुकी[1] ।
मत्कुलादपि बहिष्कृतेति तां भाषितेन भगिनीमभर्त्सयत् ॥ 24

कान्तरूप धिगिमां निशाचरीं दिव्यतामुपगतो नियुद्धतः ।
भोक्ष्यसे दिवि सुराङ्गनामिति व्याहरन्ननिलसूनुमभ्यगात् ॥ 25

निर्मितेन[2] नियुयुत्सुनाऽमुना क्ष्वेलितेन भृशमाकुले वने ।
प्रत्यबुध्यत सुतैस्समं पृथा शावकैरिव मृगेन्द्रगेहिनी ॥ 26

मूर्तयेव सविधे जयश्रिया वीक्ष्यमाणवपुषं हिडिम्बया ।
रक्षसा सह नियुद्धकांक्षिणं[3] भीममैक्षिषत पाण्डुनन्दनाः ॥ 27

मुष्टिभिः कुलिशपातनिष्ठुरैः पीवरोरुभुजयन्त्रपीडनैः ।
निष्पिपेष परुषं निशाचरं मारुतिर्मधुमिवादिपूरुषः ॥ 28

उन्मिषत्युषसि तस्य रक्षसो रक्तमुष्णमिव पातुमुत्सुकाः ।
स्वापमाकलितमानिशात्ययं वासवृक्षमथ तत्यजुः खगाः ॥ 29

---

1. पुंसि० A. 2. निर्जितेन B.
3. ०कारिणं A.

तावदुत्थितकरस्तमोमयं[1] राक्षसं विशकलय्य भानुमान् ।
भीमसेन इव पार्थमानसान्यम्बुजानि ददृशे विकासयन् ॥ 30

मन्मथार्तिमुदितां हिडिम्बया धर्मसूनुरुपलभ्य मातृतः ।
स्वीकृतं मधुररूपया तया भीममाप्रसवमादिशत्सुधीः ॥ 31

संविदामुदितया तया सह प्रस्थिता निहतरक्षसो वनात् ।
शालिहोत्रसरसि स्थितिं व्यधुस्ते पराशरसुतेन मानिताः ॥ 32

सङ्गता पवनसूनुना दिवा स्वप्रभावरचितेषु वेश्मसु ।
नक्तमन्तिकगता निशाचरी कुन्तिभोजतनयामुपाचरत् ॥ 33

काननेषु मृगनाभिगन्धिषु क्ष्माधरेषु मणिचित्रसानुषु ।
तत्र तत्र रमयाम्बभूव सा तं पुरूरवसमूर्वशी यथा ॥ 34

शक्रशस्त्रपतनार्हवक्षसं मारुतस्य तनयान्महौजसः ।
प्रापदात्मजमसौ घटोत्कचं भूर्यथा नरकमादिपोत्रिणः ॥ 35

जातमात्रपरिपुष्टविग्रहः[2] श्मश्रुलेन स मुखेन दंष्ट्रिणा ।
इष्टकर्मसु पुरः करोमि वः साह्यमित्यनुगतस्तया ययौ ॥ 36

भूसुराकृतिभृतः क्रमेण ते वेत्रकीयपुरमेत्य कस्यचित् ।
आलये विदधुरग्रजन्मनो वासमाचरितभैक्षवृत्तयः ॥ 37

तत्र जातु परिरभ्य पुत्रकौ भर्तुरङ्क भुवि शोचितस्थितौ ।
पृच्छति स्म रुदतीं द्विजाङ्गनां शोकहेतुमुपसृत्य यादवी ॥ 38

तां जगाद गृहमेधिनो वधूरन्तिकेऽस्य नगरस्य दारुणः ।
दुर्दमो बक इति श्रुतस्तटे यामुने वसति कोऽपि कोणपः ॥ 39

---

1. ॰उद्गत॰ B. 2. ॰वृद्ध॰ A.

पूर्वमत्र गृहमेधिनोऽमुना बाधिता[1]- बलवताश्नता नराः-[1] ।
प्रत्यहं प्रतिगृहं क्रमेण तैस्तृप्तयेऽस्य पुरुषः कृतो बलिः ॥ 40

तेन वेतनमिदं द्विजास्पदं रक्षसा भुजबलेन लभ्यते ।
भागधेयविरहेण नः क्रमात् भागधेयदिवसोऽयमागतः ॥ 41

पुत्रकस्तु कुलतन्तुरेष मे कन्यका यदि परस्वमुच्यते ।
भर्तुरस्य विषहो न विप्लवो मामयं च न ददाति मृत्यवे ॥ 42

क्रेतुमद्य पुरुषं न मे धनं केन निस्तरणमादितो भवेत् ।
इत्युदीरितगिरं यथा पुरा तां जगाद रुदतीं तदा पृथा ॥ 43

कश्चिदस्ति तनयेषु मे बली तं ददामि सखि ते बलिं कुरु ।
मान्त्रिकस्स हतराक्षसः पुरा दुर्दमं बकममुं हनिष्यति ॥ 44

तद्वचश्श्रवणतस्सविस्मयौ दम्पती धृतमुदौ बभूवतुः ।
मातृशासनकरश्च मारुतिस्सञ्जहर्ष समरे समुत्सुकः ॥ 45

तं हिडिम्बवधदृष्टविक्रमैर्भ्रातृभिर्बहुमतोद्यमं रहः ।
विस्मितैर्निजजनैरुपर्युपर्यन्नमर्पितमभोजयद्द्विजः ॥ 4[illegible]

रक्तमाल्यवसनानुलेपनः पौरलोचनकृतोत्सवः पुरात् ।
पूरितं शकटमोदनादिभिर्युक्तधुर्यमधिरुह्य निर्ययौ ॥ 47

कङ्कजम्बुककदम्बकाकुलैराचितं नरकरङ्कराशिभिः ।
झिल्लिकामुखरसालमासदत् पूतिगन्धि पुरुषादकाननम् ॥ 48

कौणपे तु निहते मया ततो नैव भोक्तुमुचितं शवस्पृशा ।
वीतभीरिति विचिन्त्य तद्बलिं भोक्तुमारभत मारुतात्मजः ॥ 49

---

1-1. बलवदश्नता नरान् B.

स्वैरमभ्यवहरन्वनोगतः प्रौढमट्टहसितं चकार सः ।
घट्टयंश्च दशनान्मिथः क्रुधा निर्ययौ गिरिगुहाशयो बकः ॥ 50

कोणपेन कुपितेन पातिताः पार्श्वयोरसकृदस्य मुष्टयः ।
प्रत्युतोदरभुवि[1] श्लथस्थितिं संहतां कवलसंहतिं व्यधुः ॥ 51

अन्तिकस्थमनवेक्ष्य राक्षसं भूय एव बुभुजे स तद्बलिम् ।
किं महेभपिशिताशिनो भयं विद्यते मृगपतेस्सृगालतः ॥ 52

अस्तशङ्कमभितस्त्वया वटो भुज्यतां बलिरयं क्व गच्छति ।
न्यस्यते जठर एव तावके त्वां ग्रसामि सह तेन नन्वहम् ॥ 53

इत्युदीरितमनेन भाषितं सस्मितं[2] निशमयन्वृकोदरः ।
स्वैरमभ्यवहृतेरनन्तरं प्रत्युवाच परिमार्जितोदरः ॥ 54

यन्नृशंस भवता नृणां वधादूर्जितं जगति शौर्यमार्जितम् ।
शक्तिरस्ति यदि तत्प्रदर्श्यतां मानुषे मयि हिडिम्बमर्दने ॥ 55

उद्धृतं तदनु सालमक्षिपन्मारुतेरुपरि यामिनीचरः ।
धूतपत्रपटलं कृतारवं केलिपत्रिणमिवाग्रहीन्स तम् ॥ 56

तावुभौ च विपुलोपलोत्किरौ तालसालसुतमालवर्षिणौ ।
मुष्टियुद्धपरिनिष्ठितौ मिथः खेचरस्तुतिपदं बभूवतुः ॥ 57

द्वन्द्वयुद्धरभसश्रमालसं तं प्रगृह्य चरणे निशाचरम् ।
व्योमविभ्रमणवेगविह्वलं वायुसूनुरवनावपातयत् ॥ 58

कण्ठरोधनविमुक्तजीवितं तं विकृष्य नगरान्तिके कृती ।
सायमाहृतविकृष्टरोहितः केसरीव निजवासमासदत् ॥ 59

---

1. प्रत्नुतो० B.  2. सस्मयं B.

आगतं सपदि[1] स द्विजः पृथा भ्रातरस्तमपदानशंसिनम् ।
आशिषा च परिरम्भणेन च श्लाघया च ममभावयन् क्रमात् ॥ 60

द्वारसीमनि पुरः प्रगे जनैर्वज्ररुद्ध इव पर्वतः स्थितः ।
वीक्ष्यते स्म सभयं ससंमदं साद्भुतं च निहतो निशाचरः ॥ 61

तादृशस्य निधनेन रक्षसः प्रेक्षया विगतविप्लवैर्नृपैः ।
व्याघ्रनाशमुदितैर्वृतं मृगैरन्तकारि वनमेकचक्रया ॥ 62

अध्वगादधिगतं द्विजन्मनो यज्ञसेनदुहितुः स्वयंवरम् ।
द्रष्टुमुत्सुकधियः पृथासुता निर्ययुस्सपदि वेत्रकीयतः ॥ 63

व्यस्तविश्वनिगमस्तपोधनो भारतस्य महतः कृतेः कविः ।
गच्छतः पथि कृतोदयः कृती तानुवाच सुलभद्विजाकृतीन् ॥ 64

पार्षतो जतुगृहानलच्युतान् जीवतो गुरुमुखान्निशम्य च ।
पाण्डवा मम सुतास्वयंवरं निर्विशेयुरिति लब्धनिश्चयः ॥ 65

यूयमध्ववहनादहर्निशं प्राप्नुथ द्रुपदपट्टणं द्रुतम् ।
स्वीकरिष्यथ वधूमयोनिजां कन्यकां तदनु यास्यथोदयम् ॥ 66

इत्थमुक्तवति तापसे गते जाह्नवीं निशि नृपात्मजा नदीम् ।
प्रापुरर्जुनकरोल्मुकार्चिषा मोहितान्धतमसेन वर्त्मना ॥ 67

स्त्रैणक्लृप्तजलकेलिमुद्धतं तत्र चित्ररथमाहिताहवम् ।
आततान तनयश्शचीपतेराशु दग्धरथमस्त्रवह्निना ॥ 68

निर्जितेन युधि सख्यमीयुषा तेन भावुककरेण चोदिताः ।
धौम्यमुत्कचकवर्तिनं गुरुं प्राप्य तेन सहिताः प्रतस्थिरे ॥ 69

---

1. रहसि B.

पार्थाः क्रमेण पथिकद्विजसार्थयुक्ताः
पाञ्चालराजनगरीमविशन्नुदाराम् ।
कृष्णास्वयंवरकृते मिलतां नृपाणां
रुद्धोपशल्यभुवमुच्छ्रयिभिर्निवेशैः ॥ 70

कुलालभवने ततः कुरुकुलावतंसाः क्वचित्
निधाय निजमातरं द्रुपदभाविजामातरः ।
सनाथमवनीभुजां कनकमञ्चभाजां शतैः
स्वयंवरगृहं महत्स्वनितशङ्खतूर्यं ययुः ॥ 71

तदनु सहचरीभिस्तत्र मञ्चान्तरस्थां
नृपतिनयनभृङ्गश्रेणिनीलाब्जमालाम् ।
द्रुपददुहितरं ते वीक्ष्य पाण्डोः कुमारा
युगपदिषुभिरासन्पञ्चबाणस्य विद्धाः ॥ 72

धृष्टद्युम्नस्तावदागत्य रङ्गे कृत्वा चापं दुर्नमं सायकांश्च ।
लक्ष्यं लोलं व्योम्नि यन्त्रान्तराले राजन्येभ्यो दर्शयन्नाबभाषे ॥ 73

एतद्विधाय सहसा धनुराततज्यम्
एभिश्शरैर्गगनलोलमिदं शरव्यम् ।
युष्मासु भूमिपतयः कृतहस्तमुख्यो
यः पातयेत्स परिणेष्यति मत्स्वसारम् ॥ 74

**इत्यगस्त्यपण्डितकृतौ[1] बालभारते महाकाव्ये[2] चतुर्थः सर्गः[3]**

1. A omits पण्डित. 2. B omits. 3. ...समाप्तः B.

# अथ पञ्चमस्सर्गः

अथैवमाख्याय स वीरवर्यश्चिकीर्षतः कार्मुकमाततज्यम् ।
महीपतीन्मञ्चगतान्भगिन्यै प्रदर्शयन्प्रारभताभिधातुम् ॥ 1

दुर्योधनोऽसौ नृपतिः पुरस्ताद्दृष्ट्वा यदीयां श्रियमत्युदग्राम्[1] ।
व्रीडेन गूढः किल दिश्युदीच्यां कुत्रापि वासं कुरुते कुबेरः ॥ 2

अस्यानुजा मौलिभिरूढरत्नैर्दुश्शासनाद्या वसुधाधुरीणाः ।
पुष्णन्त्यमी कांचनकान्तिमुग्रं[2] शेषस्य नागा इव पार्श्वभाजः ॥ 3

गांधारनाथ[3]श्शकुनिर्गरीयानसौ यमक्षेषु वदन्ति शौण्डम् ।
आचार्यपुत्रोऽयममुष्य शौर्ये स एव देवः सदृशः पिनाकी ॥ 4

अबिभ्रदङ्गैः सहजं तनुत्रं बालार्कतुल्यद्युतिरेष कर्णः ।
जीमूतवाहस्य शिबेर्दधीचेरनन्तरं स्पर्शनतो यमाहुः ॥ 5

हलायुधोऽसौ हरभूधराभो विभाति नीलाम्बरयोर्युगेन ।
द्विधाकृतेनेव हलेन रोषात्पूरेण बद्धो यमुनापगायाः ॥ 6

वंशे यदूनां विहितावतारः श्रीवत्सलक्ष्मा पुरुषस्स एषः[4] ।
विच्छायतां येन हृते द्युवृक्षे शचीमुखं नन्दनवत्प्रपेदे ॥ 7

अस्यान्तिके सात्यकिमुख्य एष विभाति वृष्ण्यन्धकभोजवर्गः ।
प्रसूनबाणोदयकारणस्य ज्योतिर्गणः पत्युरिवौषधीनाम् ॥ 8

---

1. ॰अत्युदाराम् B.
2. ॰मुद्रां B.
3. ॰राजः B.
4. स एव B.

अयं जरासन्ध इति प्रसिद्धो[1] वारान्दशाष्टौ च जिते मुरारौ ।
पराङ्मुखी शूरगणानुरक्ता श्रीरेव यस्याभिमुखीबभूव ॥ 9

प्राग्ज्योतिषेशो भगदत्त एष यस्योपवाह्यो युधि सुप्रतीकः ।
स्मेराणि वक्त्राम्बुजकाननानि मृद्नात्ययत्नादरियोधयूनाम् ॥ 10

चेदीश्वरोऽसौ शिशुपालनामा तृणाय शौरिं भुवि मन्यते यः ।
शल्योऽयमासाद्य यमाशितारं भद्राणि सर्वेऽपि भजन्ति माद्राः ॥ 11

निधिर्महिम्नां महनीयकीर्तिर्माहिष्मतीनायक एष नीलः ।
प्रयुक्तहेतिस्समरे परेषु तनूनपाद्यस्य तनोति साह्यम् ॥ 12

एतेऽपि चान्ये बहवस्त्वदर्थमिहागता भूपतयो महान्तः ।
अमीषु कंचित्कृतलक्ष्यवेधं भद्रे वृणीतां भवती वरेण्यम् ॥ 13

अथोदतिष्ठन्कनकासनेभ्यः कन्या ममैवेयमिति[2] ब्रुवाणाः ।
मज्यं धनुस्तत्र विधातुकामास्सदस्यहंपूर्विकया नरेन्द्राः ॥ 14

शरासनारोपणतत्पराणां गणं यदूनां विनिवार्य कृष्णः ।
पृथासुतान्मध्यगतान्द्विजानां प्रदर्शयामास हलायुधाय ॥ 15

रङ्गस्थलालंकरणायमानं शरासनं तद्गिरिराजसारम् ।
नालं ग्रहीतुं कतिचिन्नरेन्द्रा ग्रहीतुमारोपयितुं च केचित् ॥ 16

आरोपयन्[3] ज्यामथ माषमात्रे पपात विद्धो धनुषा स नीलः ।
मुद्गान्तरे सत्त्वनिधिस्तु शल्यस्स मागधस्सर्षपमात्र एव ॥ 17

---

1. प्रतीतो B.
2. ममैवेति नृपा B.
3. आरोपितं B.

चापं महान्तं तपनस्य सूनावधिज्यमातन्वति रोममात्रे ।
स तं विचिक्षेप विकीर्ण्णमाल्यमाधोरणं दुष्ट इव द्विपेन्द्रः ॥ 18

इत्थं वृथाभूतमनोरथेषु सुयोधनाद्येषु नराधिपेषु ।
द्विपेन्द्रहस्तो महतां द्विजानां मध्यादुदस्थान्मघवत्कुमारः ॥ 19

द्विजेषु हृष्यत्सु स रङ्गमध्ये विकृष्य सज्यं धनुरुज्झितेन ।
विद्धं शरव्यं विशिखेन यन्त्रादपातयद्राजकृताभिमानम्[1] ॥ 20

तं दिव्यपुष्पप्रकराभिवृष्टं[2] मनोभवं मूर्तमिवात्तचापम् ।
श्लाघापरैरब्जनिभैरपाङ्गैरवाकिरत्संसदि राजपुत्री[3] ॥ 21

तयाधिकण्ठं निहितामुदारां कल्हारमालामुरसा दधानः ।
रराज भूयस्सुरराजसूनु स्सगैरिकस्यन्द इवाञ्जनाद्रिः ॥ 22

तृणाय मत्वा नरनायकानां निकायमायामभुजस्सवीरः ।
आदाय कन्यां निरियाय रङ्गाच्छौर्योदधिः शौल्किकचापपाणिः ॥ 23

मूढोऽयमस्मानवमत्य कृष्णामदाद् द्विजायेति नृपाय कुप्यत् ।
द्रुतोद्धृतक्ष्माधरभीमयुक्तः प्रत्युद्ययौ राजकमिन्द्रसूनुः ॥ 24

दण्डैरमीभिर्दलितावलेपान्[4] नृपान्विधास्याम इति ब्रुवाणान् ।
स्मेराननेन्दुर्निखिलान्द्विजाती न्निवारयन्कार्मुकमाचकर्ष ॥ 25

कर्णेन पार्थं सह युध्यमानं भीमं च शल्येन नियुध्यमानम् ।
तौ श्लाघयन्तश्शतशो[5] नरेन्द्रास्सुरा इव प्रेक्षकतामवापुः ॥ 26

---

1. ०राजगतो हि० B.
2. ०प्रकरावकीर्णं B.
3. राजकन्या B.
4. ०दलितानशेषान् A.
5. स्तोमयन्त० B, Cv.

द्विजातिबुद्ध्या मृदुबाणमोक्षो विद्धश्शरैर्मर्मसु फल्गुनेन ।
ब्राह्मं किलाजय्यमवेक्ष्य तेजो रवेः कुमारस्समरान्निवृत्तः ॥ 27

भीमस्तु निर्वर्तितबाहुयुद्धमुत्क्षिप्य शल्यं भुवि पातयित्वा ।
यन्नावधीन्मातुलमार्तबन्धुः श्लाघ्योऽभवत्तेन यशोधनानाम् ॥ 28

ततः प्रवीरौ जितकर्णशल्यौ जिज्ञासवः शौरिनिवारितास्ते ।
अयासिषुः स्वानि पुराणि सर्वे सविस्मयव्रीडरुषो नरेन्द्राः ॥ 29

आदाय कृष्णां दिवसावसाने कुरूद्वहौ प्राप्य कुलालगेहम् ।
काप्याहृताऽभूदियमम्ब भिक्षेत्यन्तर्गतां मातरमुक्तवन्तौ ॥ 30

सा भुज्यतां प्रौढरसा भवद्भिरित्यूचुषी सूनृतभाषिणीयम् ।
निर्गत्य गेहादवलोक्य कन्यां विलज्जमानाऽजनि धर्मभीता ॥ 31

तथाविधां तां स निरीक्ष्य भोज्यां धर्मात्मजो वाचमिमामवादीत् ।
तवाम्ब नैतद्वचनं मृषा स्यात्सर्वे यदस्यां वयमार्द्रभावाः ॥ 32

अन्येद्युरुद्यत्प्रमदो नरेन्द्रस्तान् क्षत्रियानेव चरैर्विदित्वा ।
पुरोहितेन प्रहितेन तूर्णमानाययामास निजं निकेतम् ॥ 33

तत्रोपविष्टाः पृथगासनेषु पृष्टान्वयास्ते पृषदात्मजेन ।
लाक्षागृहान्मृत्युमुखादिव स्वान्परिच्युतान्पाण्डुसुतानशंसन् ॥ 34

सत्कृत्य सर्वान्स च हृष्टचेता युधिष्ठिरं वाचमवोचदेवम् ।
लब्धामसौ बाहुबलेन कन्यां गृह्णातु पाणौ महितेऽह्नि पार्थः ॥ 35

धर्मात्मजस्तं निजगाद राजन्पश्चापि कृष्णां वयमुद्वहामः ।
योषिन्मणिं रत्नमनर्घमेतत्सहोपभोक्तुं समयः कृतो नः ॥ 36

तत्रागतस्तावदमेयभूमा व्यासो मुनिर्व्याहरदेवमेनम् ।
एका बहूनां दयिता कथं स्यादिति प्रतर्को हृदि भूप माभूत् ॥ 37

तेषां समीपे विनिवेश्य[1] कृष्णां नृपाय तस्मै विजने निषण्णः ।
स पञ्चपत्नीत्वमशेषमस्या यथाक्रमं प्राक्रमताभिधातुम् ॥ 38

इयं पुरा जन्मनि पुण्यशीला नालायनीति श्रुतनामधेया ।
वृद्धं पतिं कुष्ठिनमृद्धरोषं मौद्गल्यमाराधयति स्म साध्वी ॥ 39

आत्तं परीक्षार्थमपास्य रूपं चिरात्प्रसन्नो मुनिरिङ्गितज्ञः ।
स्वं पञ्चधात्मानमसौ विभज्य रम्याकृतिस्तां रमयाम्बभूव ॥ 40

अत्रापि जन्मन्यनुगच्छतीमां तादृग्विधो हन्त स एव भावः ।
किञ्चेदमाकर्ण्य सा तमेव प्रागिन्द्रसेनेति पतिं प्रपेदे ॥ 41

स तां तपोविघ्नभयेन मुक्तां भूयोऽपि भोगेप्सुमिदं जगाद ।
अयि त्वदीयैर्नियमैर्गिरीशः प्रीतो वरं दास्यति काङ्क्षितं ते ॥ 42

तपोभिरुग्रैरपरोक्षयन्तीमात्मानमुत्तंसितबालचन्द्रः[2] ।
दन्तप्रभाकर्बुरकण्ठकान्तिरवोचदेनां गिरिशः प्रसन्नः ॥ 43

अलं चरित्वा व्रतमर्थितोऽहं पतिं त्वया संप्रति पञ्च कृत्वः ।
तदन्यजन्मन्यवदातवृत्ता त्वं लप्स्यसे पञ्च पतीन्प्रतीतान् ॥ 44

कल्याणि निर्वेदमपास्य गङ्गां गच्छ द्रुतं द्रक्ष्यसि तत्र कंचित् ।
आदाय तं मत्कमुपैहि पार्श्वमिति ब्रुवन्नन्तरधत्त देवः ॥ 45

कृतावगाहां गगनापगायां हेमाम्बुजान्यश्रुकणैस्स्पृशन्तीम्[3] ।
यदृच्छयाऽऽगत्य सहस्रनेत्रस्तां वीक्ष्य विस्मेरमना बभूव ॥ 46

---

1. बिनिवेश्य B. 2. ०मुरधचन्द्रः B.
3. ०स्नपन्तीं B.

पृष्टान्वयाख्यास्पदशोकहेतुरायाहि वक्ष्याम्यखिलं तवेति ।
विलोभयन्ती बलवैरिणं सा हन्तुः पुरामन्तिकमानिनाय ॥ 47

कान्तासखं कंचन कांचनाद्रौ दीव्यन्तमालोक्य युवानमक्षैः ।
कस्त्वं प्रभुं मामवमत्य मूढः क्रीडापरोऽसीत्यवदत्स रुष्टः ॥ 48

हरेण देव्या सह दीव्यतैव हृष्टस्सहासेन निवृत्तकण्ठम् ।
स्तब्धाकृतिस्स्तम्भ इवावतस्थे विस्रस्तवज्रेण करेण शक्रः ॥ 49

दुरोदरान्ते स विभोर्निदेशादुद्घाटितद्वारशिलाकवाटाम् ।
आत्मोपमैरध्युषितां चतुर्भिर्घोराकृतिं वीक्ष्य गुहां चकम्पे ॥ 50

आचष्ट देवः कुपितो महेन्द्रमस्याः फलं भोक्तुमहं युतायाः ।
पदच्युतैस्संश्रितमेभिरिन्द्रैर्बिलं भजेथा निरयोपमानम् ॥ 51

त्रस्तस्स तं प्राञ्जलिराह नाथ[1] क्षमस्व दासस्य ममापराधम्[2] ।
नाहं कृतान्तो न पुरो न कामः क्रोधस्य यन्मां विदधासि लक्ष्यम् ॥ 52

विहस्य शक्रं विभुरादिदेश क्षन्तास्मि निर्वर्तय मन्निदेशम् ।
एभिस्सहायैस्सह भूतधात्र्यामंशेन सद्यो रचयावतारम् ॥ 53

क्रमेण धर्मश्च समीरणश्च त्वं चाश्विनौ चोद्भवहेतवो वः ।
इयं च साध्वी दयिता भवित्रीत्याख्यातवानन्तरधान्महेशः ॥ 54

पञ्चापि तान्विद्धि वसुन्धरायां हर्तुं भरं पाण्डवतां प्रपन्नान् ।
स्त्री सा च तेषां परिणामवद्भिः पुराकृतैस्तैस्सुकृतैस्सुतासीत् ॥ 55

इत्यूचिवान्दिव्यदृशं वितीर्य प्रदर्शयामास मुनिर्नृपाय ।
सभागतान्पाण्डुसुतान्सुरेन्द्रान् स्त्रियं च तां पार्श्वगताममीषाम् ॥ 56

---

1. नाथः B. 2. महा० A.

सविस्मयानन्दविधेयचेताः कृत्वा गिरीशस्य गिरं प्रमाणम् ।
आकांक्षितं पाण्डुसुतैरनिन्द्यैः कृष्णाविवाहं द्रुपदोऽनुमेने ॥ 57

अथापरेद्युर्हृदये करे च कुरूद्वहाः कौतुकमुद्वहन्तः ।
उद्वाहवेषेण विशेषदृश्याः प्रसाधितां मण्टपिकामवापुः ॥ 58

युधिष्ठिरस्तत्र पुरोहितेन वैवाहिकैर्वस्तुभिरभ्युपेताम् ।
आलम्ब्य हस्तं द्रुपदस्य भेजे वैडूर्यसोपानपथेन वेदिम् ॥ 59

क्रमेण वर्गः कुलपालिकानां प्रसाधयन्तीं वपुषा विभूषाम् ।
आनीय कृष्णां तपनीयपीठे निवेशयामास वरस्य पार्श्वे ॥ 60

हुतं स धौम्येन सधूमरेखं वह्निं परीयाय वधूसहायः ।
प्रियासखो भृङ्ग इवानुषङ्गं हंसो यथा रक्तसरोजषण्डम् ॥ 61

गुरोर्निदेशाद्गुणशालिनी सा मुमोच लाजान् ज्वलिते कृशानौ ।
प्रवालजाले पवनस्य वेगान्मुक्तामणीनूर्मिरिवाम्बुराशेः ॥ 62

कर्तुं ध्रुवं शत्रुनितम्बिनीनां सीमन्तशोणाश्मविहारयोग्यम् ।
अश्मानमाक्रामदभीक्ष्णमस्याः करेण भर्तुश्चरणो गृहीतः ॥ 63

इत्थं चतुर्भिः कुरुराजपुत्रैरग्राहि घर्मोदकशीकरार्द्रः ।
समुच्छ्वसत्पुष्करचारुरस्याः करः करिण्या इव यूथनाथैः ॥ 64

निवृत्तनीराजनमङ्गलेभ्यो ददौ नृपो यौतकमर्थराशिम् ।
शतं रथानां करिणां सहस्रं तुरङ्गमाणामयुतं च तेभ्यः ॥ 65

प्रतिष्ठमानः पथि धार्तराष्ट्रः निशम्य पार्थानुदितान्विषण्णः ।
निवर्त्य तेषां शमनाय भूयो रुरोध पाञ्चालपुरं बलौघैः ॥ 66

शूरैर्महीभर्तृभिरुत्सुकाभिः प्रतीक्ष्यमाणं सुरसुन्दरीभिः ।
पुरान्निराक्रामदुदस्तशस्त्रं दुर्वारदर्पं द्रुपदस्य सैन्यम् ॥ 67

अथोभयेषामपि सैनिकानां विजृम्भिते तादृशि संप्रहारे ।
निर्गत्य पार्था रथिनो नगर्या विक्रामतो वीरवरानभीयुः ॥ 68

राधेयगान्धारसुतोग्रदंष्ट्रं सुयोधनोदग्रविषेण घोरम् ।
अतर्जयत्कार्मुकमर्जुनस्य विष्फारमन्त्रैः कुरुसैन्यनागम् ॥ 69

भीमेन सार्धं सुरराजसूनुर्विमर्दयामास विरोधिसेनाम् ।
मदोद्धतेन द्विरदाननेन गजासुरस्येव चमूं कुमारः ॥ 70

पराजिताः कर्णपुरोगमास्ते पुरोचनं वर्त्मनि गर्हयन्तः ।
रथैर्ययुः खण्डितकेतुदण्डैः पुरं विहस्ताः[1] कुरुराजपुत्राः ॥ 71

पार्था जयश्रीपरिणीतिभाजः पाञ्चालसद्मन्यवसन्वहन्तः ।
यद्वद्गृहेनोपगतेन दीप्तां श्रियं मयूखाः शुचिनेव पूष्णः ॥ 72

निरस्तदुर्योधनदुर्विचारैस्संमन्त्र्य भीष्मादिभिराम्बिकेयः ।
पाण्डोर्निधित्सुस्सुतमर्धराज्ये क्षत्रा तमानाययदात्मपार्श्वम् ॥ 73

तं सानुजं वीक्ष्य समग्रभूतिं सपार्षतीकं सहमाधवं च ।
अन्यत्र तस्यां पुरि कौरवेभ्यश्चिराय सर्वे कुरवो ननन्दुः ॥ 74

ततः कदाचिद्दिवसे शुभंयौ राज्याभिषेकाय युधिष्ठिरस्य ।
सम्पूर्णकुम्भं सहमन्त्रिवृद्धैर्महीपतिर्मण्टपमाससाद ॥ 75

औदुम्बरं तत्र नरेन्द्रसूनौ प्रशास्तमातस्थुषि भद्रपीठम् ।
आपूर्य तद्रागभिषेकशंसी शंखः प्रहर्षेण च पौरलोकः ॥ 76

---

1. विलक्षाः A; Cv.

ते व्यासधौम्यप्रमुखाः प्रतीता द्विजातयः केचन मन्त्रपूतैः ।
कुम्भात्कुशाङ्कुरभृतस्सरत्नादावर्जितैरम्बुभिरभ्यषिञ्चन् ॥ 77

तदाम्बुधारा[1] तपनीयकुम्भात्तस्योपरिष्टादमला पतन्ती ।
सुधांशुबिम्बादुदयाभिताम्राज्ज्योत्स्नेव पूर्वस्य गिरेर्विरेजे ॥ 78

प्रसाधितोऽध्यास्त परार्ध्यहीरमास्तीर्णवर्णांशुकमासनं सः ।
वामेतरं वारिधिमेखला च भुजाग्रमस्यालघुभूतधात्री ॥ 79

तस्य प्रतापज्वलनाङ्कुराभैः कर्पूरखण्डज्वलितैरुदग्रैः ।
अकारि दीपैर्मणिपात्रसंस्थैरारात्रिकं मङ्गलमङ्गनाभिः ॥ 80

आरुह्य दृप्तं द्विपमौपवाह्यं पुरीं दिदृक्षुः प्रतिकर्मरम्याम् ।
पुष्पोच्चयैस्तारकितं प्रकीर्णैः भास्वन्निभो राजपथं जगाहे ॥ 81

स्तनोरुशोभाजितकुम्भहस्तैर्नार्यो भिया हस्तिभिरुह्यमानाः ।
बलाहकालक्ष्यतटिद्विलासास्तमन्वयुर्वामदृशः प्रसिद्धाः[2] ॥ 82

पुरं परीयाय निजावलोकनिष्पन्दपक्ष्मेक्षणयौवतं सः ।
निवातपद्मोज्ज्वलपद्मिनीकं शरत्सरोहंस इव क्षितीशः ॥ 83

प्रज्ञादृशः प्राप्य कदाचिदाज्ञां सहानुजैः शौरिसखश्चमूभिः ।
पूर्वैः स्थितं यत्र पुरायुराद्यैस्तान्खाण्डवप्रस्थमसावयासीत् ॥ 84

गत्वा वनं तत्कथमत्रवासो भवेदिति क्ष्माभुजि याति चिन्ताम् ।
स्मृतस्य कृष्णेन हरेर्निदेशात्त्वष्टा समागत्य पुरोऽवतस्थे ॥ 85

व्यजिज्ञप च प्रणिपत्य शौरिमेतर्हि दाशार्ह सुरर्षभेण ।
पुरं हरिप्रस्थमिति स्वनाम्ना राज्ञे नियुक्तोऽस्मि विधातुमस्मै ॥ 86

---

1. तदम्बु॰ A. 2. प्रशस्ताः B.

तेनैवमुक्तेन कृताभ्यनुज्ञस्तस्मिन्नवैषम्यवति प्रदेशे ।
सहेमरत्नात्मकमप्रमेयं[1] पुरं भुवो भूषणमाततान ॥ 87

अजातशत्रुर्दिवसे शुभेऽयौ[2] पुरीं द्विजातिव्रजकॢप्तपूजाम् ।
तुङ्गध्वजां प्राप्य गजाधिरूढो रम्यं ययौ राजपथेन गेहम् ॥ 88

सुस्निग्धवर्णां मधुराकृतिं तां दिने दिने कॢप्तनवोपचाराम् ।
कृष्णामिवान्यां प्रतिपद्य पार्थः पुरीमुदारप्रकृतिं ननन्द ॥ 89

पुरस्य तस्यातिसमृद्धिभाजः कदाचिदालोकनकौतुकेन ।
प्रासादशृङ्गे विहिताधिरोहं राजानमाभाषत विश्वकर्मा ॥ 90

राजन्नितः पश्य पुरीं शुभेयं त्वदीयदोरर्गलयाभिगुप्ता ।
ध्वजाग्रहस्तैस्सुरराजधानीं निरस्यतीवोपरि वर्तमानाम् ॥ 91

क्रीडासरस्तीरहरिन्मणीनामिन्दीवराभां गमितानि भासा ।
आघ्राय जानात्यलिपङ्क्तिरस्यामम्भोजसौगन्धिककैरवाणि ॥ 92

विलासिनीलोचनभूषितानि नीलाश्मवातायनमंडलानि ।
अत्रानुकुर्वन्ति विवृत्तमीनान्यावर्तबिम्बानि कलिन्दजायाः ॥ 93

अस्याः पताकापटमारुतेन प्रासादशृङ्गेषु हृताध्वखेदाः ।
भवन्ति नानामणिरश्मियोगादनेकवर्णा हरिदश्ववाहाः ॥ 94

निशासु हर्म्याग्रविहारभाजः सेर्ष्या मृगाक्ष्यो वदनेन्दुसाम्यात् ।
अस्यां सुधांशोरपराङ्गभागे कुर्वन्ति कस्तूरिकया कलङ्कम् ॥ 95

रोषायितैरत्रमणिप्रदीपैर्निर्भर्त्सिता गर्भगृहेषु भासा ।
तमिस्ररेखा इव जालकेभ्यो निर्यान्ति कालागरुधूमरेखाः ॥ 96

---

1. अप्रयत्नः B. 2. अभिजाते B.

निशासु चन्द्रातपचर्चितासु निष्यन्दमानाम्बुझलज्झलानि[1] ।
सद्मानि शीतांशुशिलामयानि धारागृहानत्र विडम्बयन्ति ॥ 97

यदृच्छया केलिगृहेषु गूढान्बिम्बैः परीतान्मणिभित्तिलग्नैः ।
चिरात्प्रियानत्र गवेषयन्त्यो जानन्ति संस्पर्शसुखेन नार्यः ॥ 98

क्रीडावनान्तान्मरुदेत्य मन्दं गवाक्षमार्गेण गृहं प्रविष्टः ।
अस्यां रतान्ते सुदृशां तनोति स्वेदाम्बुमुक्तामणिजालचौर्यम् ॥ 99

पयोमुचः केतुदुकूलकल्पाः सौत्रामणीनां प्रभया मणीनाम् ।
आरञ्जिताः प्रावृषिजा इवास्यां हर्म्येषु कुर्वन्ति मयूरहर्षम् ॥ 100

प्रदर्शितामित्थमुदारशोभां दृष्ट्वा गरीयान्नगरीं प्रविष्टः ।
प्रस्थापयामास सुसत्कृतं स्वः पतिर्नराणां स्थपतिं सुराणाम् ॥ 101

युधिष्ठिरादीनथ पाण्डुपुत्रानापृच्छ्य शौरौ स्वपुरं प्रयाते ।
तान्वैणिकः प्राप्य मुनिः [2]कदाचिन्मिथोर्हणान्ते निभृतानवादीत्[2] ॥ 102

इदं वचो मे शृणुतादरेण रूपेण लक्ष्मीरिव भाति कृष्णा ।
माभूदिह स्निग्धधियां भिदा वस्स्त्रियो हि मूलं कलहस्य पुंसाम् ॥ 103

सुरैः पुरा धातृवरादवध्यौ सुन्दोपसुन्दावसुरौ सगर्भ्यौ ।
तिलोत्तमालोभनिबद्धवैरावन्योन्यमुन्मादमुभावयाताम् ॥ 104

स्थिते साक्षादग्नाविव मुनिवरे साक्षिणि पुरो
मिथः पुत्राः पाण्डोरथ विदधिरे संविदमिमाम् ।
समामेकां कृष्णां परिचरतु नः कश्चिदनया
सहैनं यः पश्येत्स वसतु बहिर्हायनमिति ॥ 105

---

1. ०झरीजलानि A. 2-2. ०त्कृतार्हणस्सन्मुदितानवादीत् A.

याते मुनौ मुदितचेतसि सत्यसन्धा –
स्तस्यां तथा ववृतिरे हितकांक्षिणस्ते ।
कृष्णा च तेषु सममेव बबन्ध भावं
पुष्पेषु तेषु ऋतुजेष्विव भृङ्गमाला ॥ 106

इत्यगस्त्यकृतौ[1] बालभारते महाकाव्ये[2]

॥ पञ्चमस्सर्गः ॥

1. इत्यगस्त्यपण्डित॰ B. 2. B. omits.

# अथ षष्ठस्सर्गः

अथ कश्चिदुपागतः कदाचिन्नृपतिद्वारमुदस्तबाहुरुच्चैः ।
निजगाद गणैर्मलिम्लुचानां ह्रियमाणं निजगोधनं द्विजातिः ॥ 1

तव धैनुकमाहृतं मयेति द्विजमुक्त्वा विजयेन सत्वरेण ।
धनुराहरणाय शस्त्रगेहं विशताऽदर्शि नृपस्सपार्षतीकः ॥ 2

तमवेक्ष्य स संविदोऽनुकूलं परतः[1] प्रस्तुतकर्मणश्चिकीर्षुः ।
अतिधीरमना गृहीतशस्त्रो निरगान्निर्मितपूर्वजप्रणामः ॥ 3

वनसीमनि सायकामिषत्वं गमितेषु प्रतियोधिसैनिकेषु ।
समयुज्यत गोधनेन विप्रः स्वयमप्याशु यशोधनेन जिष्णुः ॥ 4

पुरमागतवांस्स सत्यसन्धो नृपतेः प्राप्य कथंचिदभ्यनुज्ञाम् ।
भुवि तीर्थनिषेवणाभिलाषी मुदितः पूर्वमुदङ्मुखः प्रतस्थे ॥ 5

अनुयायिनमग्रजन्मवर्गं[2] प्रथिते जह्नुभुवो निवेश्य तीर्थे ।
प्रयतेषु पयस्सु शक्रसूनुर्नियतः स्नानपरो ममज्ज सायम् ॥ 6

उरगाधिपकन्यकामुलूपीं पुरतः प्रैक्षत सिन्धुगर्भमग्नः ।
स तया तदनु स्मरातुराङ्ग्या निजमानीयत काञ्चनं निकेतम् ॥ 7

कथितान्वयनामकाङ्क्षितार्थामथ नागेन्द्रसुतां स कौरवेन्द्रः ।
शयने भुजगेन्द्रभोगशुभ्रे रमयामास रमामिवाम्बुजाक्षः ॥ 8

---

1. पुरतः B. 2. सहयायिन० A.

अजनिष्ट तदात्व एव तस्यास्तनयो विक्रमजन्मभूरिरावान् ।
तमवेक्ष्य तरङ्गितप्रमोदो रजनीं तत्र निनाय राजसूनुः ॥ 9

पुनरेत्य महानदीं प्रभाते स विसृष्टः प्रियया जलादुदीर्णः ।
स्वमुदन्तमुपोढविस्मयेभ्यः कथयामास निजानुयात्रिकेभ्यः ॥ 10

स तुषारगिरिप्रसाधितायां दिशि तीर्थानि निषेव्य विश्रुतानि ।
हरितस्तिलकम्बलस्य हन्तुर्महितं प्राप महीधरं महेन्द्रम् ॥ 11

कतिचिद्दिवसानि तत्र नीत्वा विलसत्केतकपांसुदुर्दिनेन ।
तटकाननवर्त्मना पयोधेः ककुभं प्रास्थित रामसेतुचिह्नाम् ॥ 12

नवनागलतावनोपगूढक्रमुकारण्यवतो विलङ्घ्य चोलान् ।
मणिपूरपुरं सुतो मघोनः प्रययौ पाण्ड्यपतेर्भुजेन गुप्ताम् ॥ 13

कृतपौरदृगुत्सवस्स तस्मिन्ननवद्ये परिणीतया मुहूर्ते ।
सुभगो मलयध्वजस्य पुत्र्या सह चित्राङ्गदया चिरं व्यहार्षीत् ॥ 14

पवनानभिनन्द्य ताम्रपर्ण्याः नवमुक्तासदृशोर्मिशीकरार्द्रान् ।
हरिचन्दनशीतलासु पार्थो मलयक्ष्माधरमेखलासु रेमे ॥ 15

उभयोरपि भागयोरजस्रं मिलतामर्गलमूर्मिकुञ्जगणाम् ।
लवणाम्बुनिधौ विलोक्य सेतुं बहु मेने विजयः पतिं रघूणाम् ॥ 16

श्वशुरास्पदमागतो ददर्श प्रणयिन्याः प्रतिपन्नसत्त्वगुर्व्याः ।
मितभाषणमायतं श्वसन्त्या विरहेणेव कृशं विपाण्डुगात्रम् ॥ 17

तनयेन सुजन्मना सुगात्री बहुधाशोभत[1] बभ्रुवाहनेन ।
शुचिना मणिनेव ताम्रपर्णी मलयश्रीमरुतेव दक्षिणेन ॥ 18

---

1. मुहुराशोभत A.

दुहितुस्सुतमात्मनः कुमारं विजयेनानुमतः प्रगृह्य पाण्ड्यः ।
स्थिरतामनयत्कुलं पदं च स्वमपुत्रत्वशुचा चिराय मुक्तः ॥ 19

अपरान्तगतो निषेव्यतीर्थं भुवि गोकर्णमिति श्रुतं महीयः ।
शशिभूषणभूषितं क्रमेण प्रतिपेदे तपनप्रभः प्रभासम् ॥ 20

अनुयायिजनं स तत्र हित्वा यदुपुत्रीभजनाय भिक्षुवेषः ।
निशि निर्भरजृम्भमाणतृष्णो तरुनिष्कूहगतश्चकार चिन्ताम् ॥ 21

इदमत्र चिकीर्षितं विनैकं हरिमन्ये यदवो न संवदेयुः ।
गतिरद्य स एव मे गरीयानिति निश्चित्य तमस्मरत्सहायम् ॥ 22

स्मृतिमात्रवितीर्णसंविधानस्सरथेनोषसि सारथिद्वितीयः ।
चिरदृष्टममुं निवेश्य हृष्टः सुहृदं रैवतके पुरं प्रपेदे ॥ 23

मुरशासितुराज्ञया कदाचिन्मुदितास्तत्र गिरावुपेत्य पौराः ।
मदनर्तितकामिनीकपोलच्युतकर्णोत्पलमुत्सवं वितेनुः ॥ 24

सुहृदा हरिणार्जुनस्समेतस्सवयोभि[1]स्सहितामपश्यदग्रे ।
अपरामिव रामणीयकाब्धेरुदयं प्राप्तवतीं श्रियं सुभद्राम् ॥ 25

तटिदुज्ज्वलकान्तिभाजमेनां घनरेखामिव वीक्ष्य शैलसानौ ।
नवनीप इवावनीपसूनुः पुलकैरञ्चितमूर्तिराबभासे ॥ 26

अथ मूर्तमिवानुरागमङ्गैर्नवकाषायमिषेण धारयन्तम् ।
कुहनायतिनं कुरुप्रवीरं स्वसरि न्यस्तदृशं जगाद शौरिः ॥ 27

अनिशं भगवन्ननन्यभाजा मनसा ध्यायसि यन्महीधरेऽस्मिन् ।
अरुणाधरबिम्बमायताक्षं तदिदं वस्तु तवाद्य सन्निधत्ते ॥ 28

---

1. ससखीभिः B.

हलिना सह यादवैरशेषैरभिनन्देत तवाभिलाषमार्यः ।
तदियं ह्रियतां प्रसह्य बाला विहितोऽयं ननु बाहुजस्य धर्मः ॥ 29

इति वाचमुदीर्य निश्चितार्थामगमद् द्वारवतीं पतिर्यदूनाम् ।
स्वसुरस्य वियोगसम्भवार्तिं[1] तनयोऽपि त्रिदिवाधिपस्य तीव्राम् ॥ 30

शमिताखिलदाववह्निदर्पा जलदाः प्रावृषि मुक्तवारिधाराः ।
न मनागपि शान्तये बभूवुर्विजयस्य ज्वलतो वियोगवह्नेः ॥ 31

मदनायुधमर्दितस्स वीरः करकासारमुचः कदम्बवातान् ।
नवकन्दलिनीर्भुवो न सेहे मदरक्ताश्च गिरो मयूरयूनाम् ॥ 32

अपि सन्निहिते प्रियामुखेन्दावभिजातस्मितचन्द्रिकावदाते ।
हृदयं मुहुरस्य राजसूनोरभवन्मोहमहान्धकारमग्नम्[2] ॥ 33

स्वजनाय स दर्शितः कदाचित्कृतिना मूर्त इवाश्रमस्तुरीयः ।
हरिणा निदधे बलस्य शुद्धे हृदि कन्याभवने च तन्निदेशात् ॥ 34

अतिथेर्जितकाशिनस्सुभद्रे वसतः कंचन कालमस्य गेहे ।
कुशलं परिचर्यया तव स्यादिति तां तत्परिचारिकां स चक्रे ॥ 35

कतिचिद्दिवसानि निर्विवेश प्रकटप्रश्रयमन्तिके वसन्त्याः ।
स युवा वचनानि सोपचाराण्यनरालानि च वीक्षितानि तस्याः ॥ 36

भुजगेन्द्रनिभौ भुजौ कदाचित्प्रकटज्याकिणलाञ्छनौ निरूप्य ।
स तया निरचायि सव्यसाची श्रुतपूर्वैरशुभलक्षणैश्च[3] तैस्तैः ॥ 37

भगवन्बहुतीर्थदर्शनस्ते प्रवसन्दृष्टिसुहृत्किमर्जुनोऽभूत् ।
स परिष्कुरुतेऽद्य कान्प्रदेशानिति पृष्टः प्रियया जगाद पार्थः ॥ 38

1. ०सञ्ज्वरार्तिं A; Cv. 2. शक्रसूनोः० A.
3. अपिलक्षणैः A.

अयि पृच्छसि यं भुजापदानश्रवणोदञ्चितशूररोमहर्षम् ।
स तु संप्रति कृत्रिमो यतिस्ते पुरतो वर्तत एव मन्मथार्तः ॥ 39

इति तस्य निशम्य वाचमग्रे पुलकालङ्कृतकोमलाङ्गयष्टिः ।
प्रमदाश्रुपरिप्लुतेन मुग्धा स्मितगर्भेण मुखेन्दुनाऽवतस्थे ॥ 40

अखिलोदयहेतुरद्य रात्रौ भविता मैत्र इति श्रुतो मुहूर्तः ।
मदनज्वरपीडितस्तदानीमयि पाणिं तव पीडयामि धन्यः ॥ 41

इति वादिनि वासवस्य सूनौ भवनोद्यानलतागृहं प्रविष्टा ।
सुमुखी मुदितात्मभिस्सखीभिस्सहसानीयत देवकीसकाशम् ॥ 42

कुशलं स्वसुराददत्तं पितृभ्यां हरिरज्ञातमथाग्रजेन कर्तुम् ।
गिरिशोत्सवदर्शनापदेशात्किमपि द्वीपमगात्सबन्धुवर्गः ॥ 43

विजयः स्मरति स्म नक्तमिन्द्रं पितरं भ्रातरमच्युतं सुभद्रा ।
उभयोश्च विवाहमाननाय[1] त्वरितं द्वारवतीमवापतुस्तौ ॥ 44

गृहमागतमादरादुपेन्द्रः पुरुहूतं सहितं पुलोमपुत्र्या ।
समभावयदासनादिदाना[2] त्कुशलप्रश्नकृतो मुनींश्च दिव्यान् ॥ 45

अथ तत्र शचीपुरन्दराभ्यां निजगात्राभरणैः प्रसाधिताङ्गौ ।
समयोजयदग्रतः कृशानोर्यदुपुत्रीकुरुनन्दनौ वसिष्ठः ॥ 46

तदनन्तरमाशिषामृषीणां विहितारात्रिकमप्सरोगणेन ।
मिथुनं परिरभ्य वन्दमानं हरिमापृच्छ्य दिवं जगाम शक्रः ॥ 47

व्रजतो मुरहन्तुरन्तरीपं हलिनाधिष्ठितमाज्ञया किरीटी ।
निरगादथ कन्यकानिकेतात्प्रियया चोदितवाजिना रथेन ॥ 48

---

1. विवाहमाशु कर्तुं A. 2. ०दानैः B.

विजयं पुररक्षकांश्च जित्वा कृतकन्याहरणं निशम्य यान्तम् ।
हलिना सह वृष्णयस्सरोषा हरिवाचा विरतोद्यमा बभूवुः ॥ 49

कृतसारथिकर्मणाऽनुवेलं यदुवर्यात्मजयाऽभिनन्द्यशौर्यः ।
स सखा विविधान्विलङ्घ्यदेशांत्सविधं प्राप नृपस्य धर्मसूनोः ॥ 50

निधिना विरहासहेन वारामपरेणेव समन्वितौ बलेन ।
अपरेद्युरुपेत्य रामकृष्णौ विदधाते कुशलानि पाण्डवेभ्यः ॥ 51

क्षितिनायकसत्कृते सवृष्णौ हलिनि द्वारवतीं प्रति प्रयाते ।
सह वासवनन्दनेन सख्या पुरि तत्रैव रिपुर्मधोरुवास ॥ 52

अथ शाश्वतसम्मदैकहेतुर्यदुपुत्र्या सुभटाभिनन्दनीयः ।
अभिमन्युरसूयतेन्द्रसूनोर्विजयो[1] विक्रमसंपदेव वीरात् ॥ 53

द्रुपदात्मजनन्दना च देवी प्रथितान्पञ्च जगत्त्रये पतिभ्यः ।
प्रकृताद्विषयानिवेन्द्रियेभ्यः प्रतिविन्ध्यप्रमुखानलब्ध पुत्रान् ॥ 54

सुरभिस्तबकान्स्वयाग्रगांस्तान् सह पार्थैरुपलालयन्प्रवीरान् ।
परमाद्भुतकर्मणि[2] प्रगल्भानपरांत्सन्धिमुखान् गुणानमंस्त ॥ 55

श्रियमाकलयन्सनूनकेनोदयापादितजीवलोकहर्षः ।
ऋतुषु प्रथितो यथा वसन्तः शुशुभे तेष्वभिमन्युरेव भूम्ना ॥ 56

प्रमदाय मधुद्विषः कदाचिद्गुरुघर्मदीधितिनोपदिष्टा[3] ।
अरविन्दगन्धकुड्मलश्रीरहनि द्राघिमवानभूदनेहा ॥ 57

---

1 [illegible] B.　　2. प्रवाणान् B.
3. [illegible] B.

परुषातपसंस्तवोपजातं परितापं रथवाजिनां निजानाम् ।
हिमवत्पवनैरिवापनेतुं दिननाथो दिशमुत्तरां प्रतस्थे ॥ 58

गतवत्युदयं शुचौ सुजाते नवधारागृहवारिसिक्तरथ्यम् ।
दृढपेटकबन्धमुक्तहारं नगरं नर्तिततालवृन्तमासीत् ॥ 59

नवचन्दनपङ्कचर्चितेषु[1] च्छुरितेषु द्विगुणैर्मृणालहारैः ।
निवसंस्सुदृशां कुचेषु कामो मधुलक्ष्म्या विजहौ वियोगतापम् ॥ 60

नवपाटलकर्णपूरभृङ्गाः सुदृशां स्वेदलवप्लुतो मुखेन्दून् ।
गरुदञ्चलवीजनैरकुर्वन् मुहुराश्यानकपोलपत्रभङ्गान् ॥ 61

क्षणघर्मकदर्थिता युवानः महिलानां मधुवासिताननानाम् ।
अधरामृतपानकोपयोगं मृदुमाध्वीकरसादरा वितेनुः ॥ 62

सह कामिजनेन कुर्वतीनां मधुरां मज्जनकेलिमात्तदोषम् ।
सुदृशामिव नाभिपीततोयास्तनुतामन्वहमाश्रयन्त वाप्यः ॥ 63

मधुजिद्विजयौ विहारभाजौ हिमगर्भाम्भसि यामुने वने च ।
कतिचिद्दिवसान्कठोरपूष्णो रमयामासतुरङ्गनासहायौ ॥ 64

अथ तौ सुखिनावुपाजगाम द्विजवेषं परिगृह्य जातवेदाः ।
स्वशिखाभिरिवोज्ज्वलो जटाभिर्नवदुग्धाहुतिनिर्मलोपवीतः[2] ॥ 65

तपनीयसरोरुहोपमानं हविरामोदवदाननं दधानः ।
सिचयं[3] च सितेतरं वसानो महितं धूममिवाहितानुबन्धम् ॥ 66

तमवेक्ष्य तटित्कडारतेजो पिहिताशेषदिशं पिशङ्गदृष्टिम् ।
सहसापसृतासु जातभीतिष्वबलासु प्रणतावुभावभूताम् ॥ 67

---

1. हरि० A. 2. ०नवमुग्धाकृति० B.
3. वसनं B.

क्षुधितः किल दीनया स वाचा विहिताशीर्बहु याचते स्म भोज्यम् ।
प्रतिशुश्रुवतुश्च तौ तदस्मै प्रतिपन्नार्तिनिरासका[1] हि सन्तः ॥ 68

मुदितस्तु कृशानुराह कृष्णावहमेष ज्वलनोऽस्मि न द्विजन्मा ।
अशनं प्रतिपादितं भवद्भ्यामुचितं प्राप्य पुरा भवामि तृप्तः ॥ 69

उरुभूधरमेतदुग्रसत्त्वं गहनं खाण्डवमुच्चशाखषण्डम् ।
परिरक्षति तक्षकस्य वासं सुहृदः क्षेमकरस्सुपर्वनाथः ॥ 70

तदिदं निरपायमुद्धतानां निलयं दैत्यनिशाचरोरगाणाम् ।
अलमस्मि न दग्धुमत्र दीप्ते मयि विघ्नं कुरुते घनैर्बिडौजाः ॥ 71

अधुना भवतोरवाप्य साह्यं न सहस्राक्षसहस्रशोऽपि भीतः ।
कलयाम्यचिरेण काङ्क्षितार्थं सुसहायैः कृतयः फलन्ति पुंसाम् ॥ 72

यदुनायकचोदिताय वह्निः प्रददौ गाण्डिवमर्थिनेऽर्जुनाय ।
ज्वलदक्षयसायकौ निषङ्गौ सितवाहं च मनोजवं शताङ्गम् ॥ 73

विजयः कपिकेतुचिह्नदण्डं रथमारुह्य महर्षहेषिताश्वम् ।
कवची विधृतेषुभिर्वितेने धनुरुत्तं मितमञ्जुशिञ्जनीकम् ॥ 74

पटुपाण्डवपाणिघट्टमानात्स्वनितं गाण्डिवतो धनुष्प्रकाण्डात् ।
उदपद्यत खाण्डवस्थसत्त्वप्रलयोत्पादितवज्रघोषकल्पम् ॥ 75

उपलभ्य तयोस्सहायभावं निजमालम्ब्य वपुर्नितान्तघोरम् ।
समदीप्यत तत्क्षणं समन्तादखिलं दग्धुमरण्यमाश्रयाशः ॥ 76

चटुलः कलविङ्कजालनीलः क्वचिदेकत्र कपोतयूथधूम्रः ।
विपिनादनलेन दह्यमानाद्विहगव्यूह इवोत्पपात धूमः ॥ 77

---

1. ०समाहिताः A.

पटलं तमसामिव द्विपानां कुलमर्कांशुविजृम्भणानभिज्ञम् ।
त्यजति स समं वराहयूथैर्दहनालोकसमाकुलं निकुञ्जान् ॥ 78

शिखराण्यधिरोहता तरूणां पवनाधूतशिखाकलापभाजा ।
दहता[1] फणिनां शतानि शश्वच्छिखिना सानुषु भूभृतां विजह्रे ॥ 79

चमरावलिराकुला चरन्ती सपदि प्लुष्टमुदीक्ष्य वालभारम् ।
हृदि संभृतशोकवह्निरङ्गं न विवेद ज्वलनेन दह्यमानम् ॥ 80

अनपेक्ष्य वधूपदप्रहारानसुराणां भवनाङ्गणेष्वशोकाः ।
स्तबकानिव बिभ्रतो मुहूर्तं विटपालीनकृशानवो विरेजुः ॥ 81

अखिलां दिवमालिखञ्छिखाभिः चटुलस्फोटकवाटहासघोरः[2] ।
उदजृम्भत जम्भजेतुरुच्चैः पदवीं रोद्धुमिवेर्ष्यया[3] कृशानुः ॥ 82

रथिनावनुजात्मजौ बलारेरभितोदावमलातवद्भ्रमन्तौ ।
अपि निस्सरतो जवेन कीटान् गमयामासतुराशुगामिषत्वम् ॥ 83

विबुधाधिपसूनुना विसृष्टैर्विशिखैरर्धविलूयमानमूर्ध्नाम् ।
मणयः फणिनामिव प्रकीर्णाः स्फुटमैक्ष्यन्त विहायसि स्फुलिङ्गाः ॥ 84

तृणवद्गिरयोऽपि येन दग्धाः स कथंचित्प्रबभूव दग्धुमग्निः ।
असुरान्मुरवैरिचक्रकृत्तान्विजयेषूद्धलितांश्च यातुधानान् ॥ 85

अथ तक्षकरक्षणाय वज्री गणमादिश्य पयोमुचां नदन्तम् ।
कुपितो निरगात्स्वयं च सैन्यैर्निलयादभ्रमुवल्लभाधिरूढः ॥ 86

स तटिन्मयतर्जनीविलासाः भुवनक्षोभकरेण गर्जितेन ।
दववह्निमिवाशु तर्जयन्तः खमगाहन्त वलाहका महान्तः ॥ 87

---

1. ग्रसता A. 2. प्रकट० A.
3. ०रोद्धुमिवोद्धतः B.

चटुलाग्निशिखाविभागगर्भैर्दिवि धूमैस्समुपेयुषामभेदम् ।
स्तनितेन सविद्युदुद्गमानामचिराद्व्यक्तिरजायताम्बुदानाम् ॥ 88

उपरि ज्वलनस्य दृश्यमाना हसितैरावतहस्तदण्डदैर्घ्याः ।
विदधुर्जगदण्डमण्डपस्य स्फटिकस्तम्भधियं घनाम्बुधाराः ॥ 89

जलदैर्गमिते तनुत्वमग्नौ विजयेनोद्धतरोषपावकेन ।
वियति प्रतिकारकाङ्क्षिणा द्राङ्महदस्तम्भमकारि बाणकूटम् ॥ 90

उपरि त्वरितं निपत्य शीर्णो जलदासारभरः पतन्समन्तात् ।
घनधूमवितानितस्य चक्रे शरकूटस्य विचित्रभित्तिशोभाम् ॥ 91

दहति प्रबलं वनं कृशानौ तनयं तत्र निगृह्य निष्पतन्तीम्[1] ।
विजयो विशिखेन लूनशीर्षां व्यधित व्योमनि तक्षकस्य पत्नीम् ॥ 92

क्षणमुल्बणवर्षलब्धमोहं विदधानेन निजं सुतं मघोना ।
दहनादथ मातृपुच्छलग्नः सुहृदस्सूनुरमुच्यताश्वसेनः ॥ 93

विधृतायुषि शीर्षमात्रशेषे शरणं जग्मुषि भानुसूनुमस्मिन् ।
घनभङ्गसुहृत्प्रियावधाभ्यामभिचुक्रोध कपिध्वजं महेन्द्रः ॥ 94

कुपिते कुलिशास्त्रभाजि तस्मिन्नपरे दिक्पतयो गृहीतशस्त्राः ।
वसुरुद्रमुखाश्च योद्धुकामा विबुधा यादवकौरवावभीयुः ॥ 95

विविधायुधवर्षिणां च तेषां प्रसरद्बाणगणैर्निवारयन्तौ ।
कलहप्रणयी मुनिः प्रवीरौ मुहुरश्लाघत कम्पितेन मूर्ध्ना ॥ 96

जितसर्वदिवौकसो दिदृक्षुः पुरुहूतः पुनरात्मजस्य शौर्यम् ।
शरचूर्णितदारुणाश्मवृष्टेः प्रजिघाय प्रथितं महेन्द्रशृङ्गम् ॥ 97

---

1. निस्सरन्तीं A.

तदुदञ्चितरत्नरश्मिपालीसुलभालीकसुपर्वचापचारु ।
शकलीकृतमर्जुनप्रयुक्तैर्जवनैरभ्रमिवाशुगैर्विशीर्णम् ॥ 98

दिवि वागशरीरसम्भवाऽभून्मघवन्नेह वने सुहृत्तवास्ति ।
विद्धासि रणं यदर्थमाभ्यां स कुरुक्षेत्रमगात्पुरैव दैवात् ॥ 99

अनयोरवतीर्णयोर्धरित्र्यां नरनारायणयोर्न कोऽपि तुल्यः ।
तदलं समरेण मानयेमौ विपिनेऽस्मिन्नसतां प्रशासितारौ ॥ 100

इति तामुदितां निशम्य वाचं बलशत्रौ त्रिदिवं प्रतिप्रयाते ।
गरुडध्वजवानरध्वजाभ्यां जयशङ्खावभिपूरितावभूताम् ॥ 101

ताभ्यां ततोऽथ शरवर्षिणि[1] विघ्नजाते
विद्राविते जलदवृन्द इवेन्द्रसैन्ये ।
विश्वं युगान्त इव संश्रितसत्वजात-
मासाद्य खाण्डवमरण्यमतुष्यदग्निः ॥ 102

तावत्तक्षकमन्दिराद्भयवशान्निर्गत्य धावन्मयः
कालेनेव जिघत्सुना हुतभुजा रंहस्विनानुद्रुतः ।
कृष्णेनापि जिघांसुना धृतवता चक्रं पुरो लक्षित-
स्त्रायस्वेति वदन् जगाम शरणं जम्भद्विषो नन्दनम् ॥ 103

लब्धाभयं विजयतः प्रतिसंहृतेषो
स्तत्याज शौरिरिव तं स हिरण्यरेताः ।
आपृच्छ्य तौ विजयिनौ तदनु प्रवीरौ
सौहित्यमन्थरगतिस्त्रिदिवं प्रतस्थे[2] ॥ 104

---

1. विशिखवर्षिणि B.  2. अपेदे A.

पार्थोऽपि पक्ष्मलदृशा सह माधवेन
तत्तन्महेन्द्ररचितं ममरं प्रशंसन्[1] ।
राजन्मकाशमसृजा सुरयोधयूना-
मारञ्जितध्वजपटेन ययौ रथेन ॥ 105

इत्यगस्त्यकृतौ बालभारते महाकाव्ये

॥ षष्ठस्सर्गः ॥

---

1. °महेन्द्रममरं पथि संप्रशंसन् B.

# अथ सप्तमस्सर्गः

कृष्णः कृतप्रतिकृतोत्सवमिन्द्रसूनोः
प्रीतो मयं मणिसभाकरणे नियुज्य ।
बन्धूंश्चिराय बलभद्रमुखान्दिदृक्षु
राप्रुच्छ्य धर्मसुतमात्मपुरं प्रतस्थे ॥ 1

दैत्येन यानि कृतिना वृषपर्वनाम्ना
गुप्तानि[1] बिन्दुसरसि स्फुटिकोत्तमानि[2] ।
रत्नैस्स किङ्करसहस्रसमाहृतैस्तै
श्चित्रां सभामसुरवर्धकिराततान ॥ 2

तस्यां दिने रचयता गुणिनि प्रवेशं
संभावितो नृपवरेण मयो यियासुः ।
प्रादाद्गदां बकभिदे युवनाश्वसूनोः
शङ्खं नराय वरुणस्य च देवदत्तम् ॥ 3

तां नारदो मुनिरुपेत्य सभां कदाचि
त्संदर्शितां नृपतिना कृतसत्क्रियेण ।
प्राशंसदभ्यधिकमाश्रितपुण्यकृद्भि
र्धातुर्दिशामधिभुवां च समं सभाभिः ॥ 4

आचष्ट चैनमतिहृष्टमना नरेन्द्रं
दन्तांशुभिर्द्विगुणयन्निव[3] देहकान्तिम् ।
पाण्डुः पिता पितृपतेर्निवसंत्सभायां
राजन्भवन्तमिदमाह महानुभावम् ॥ 5

---

1. क्षिप्तानि B   2. स्फटिकान्तराणि B.   3. ०निज० B.

सम्राट् त्रिशङ्कुतनयः किल राजसूयं
कृत्वा सभामधिवसत्यधुना मघोनः ।
त्वं चानुजैरुपहृतेन दिशो विजित्य
द्रव्येण दुर्लभमिमं क्रतुमाचरेति ॥ 6

दिष्ट्या तदेनमुपगम्य निरस्तविघ्न-
मर्धासनं सुरपतेरधिवत्स्यसि त्वम् ।
स्वस्त्यस्तु ते शशिकुलाभरणेति शंसन्
द्यामुत्पपात शरदम्बुदवन्महर्षिः ॥ 7

आगत्य तावदवदन्नृपतिं मुरारि
र्यागं चिकीर्षसि कुरूद्वह राजसूयम् ।
तस्मिन्बृहद्रथसुते मगधाधिनाथे
सम्राजि जीवति न शक्यमसाववाप्तुम् ॥ 8

चैद्येन सैन्यपतिनाऽनुगतस्य यस्य
जेतुं दिशो वसुमतीं भ्रमतः पदाब्जम् ।
राज्ञां चिराय भगदत्तपुरोगमाना
माधूम्रं मकुटमाल्यरजोभिरासीत् ॥ 9

वागान्दशाष्ट विजितेन मया च सार्धं
त्रस्ता यतः क्षितिमिमामपहाय सर्वे ।
सिन्धौ स्थितिं विदधते यदवस्मपक्षा
मेनासुतेन सह वज्रभियेव शैलाः ॥ 10

यष्टुं त्रिशूलधरमष्टसहस्रसंख्या
येनाऽगतास्सपदि[1] मुक्तमदा यथेभाः ।

1. °हृत° B.

आराद्गिरिव्रजपुरीं मुखरामिदानीं
कुर्वन्ति शृङ्खलखलत्कृतिभिर्नरेन्द्राः ॥ 11

चन्द्रार्ककौशिकवरैर्द्विषतामजय्यं
सर्वायुधा विषयविग्रहमातिथेयम् ।
हन्तुं नरेन्द्रमरुदात्मज एव दक्षः
शक्तो हि मन्दरगिरिर्मथितुं पयोधिम् ॥ 12

तस्मिन्हते बहुषु राजसु मोचितेषु
श्रेयो भवेत्तव यशश्शुचि ते च वश्याः ।
अन्येऽपि सेवितुमुपेत्य भयेन वासं
त्वद्द्वारसीम्नि रचयिष्यति राजलोकः ॥ 13

इत्यूचिवान्मगधराजवधाय वीरा-
वादाय भीमविजयौ क्षितिपालदत्तौ ।
प्रीतो गिरिव्रजमभिव्रजति स्म शौरि
र्दन्तौ वहन्निव गजस्तटघातदक्षौ ॥ 14

देशान्विलङ्घ्य विविधान्द्विजवेषगूढा
स्ते मागधं पुरमवाप्य गता निषद्याम् ।
वैश्याहृतांशुकविलेपनमाल्यभाजो
वीरास्त्रयोऽपि विविशुर्विमतस्य गेहम् ॥ 15

अभ्युद्गतानधिगतातिथिसत्क्रियांस्ता
न्प्राप्तासनान्प्रथमवर्णविरुद्धवेषान् ।
दृष्ट्वा धनुर्गुणकिणाङ्कभुजान्नरेन्द्रः
के यूयमत्र किमुपागतमित्यपृच्छत् ॥ 16

कंसारिमुक्तनिजपाण्डुसुताभिधानं
दोराहवार्थिनमसाववधीर्य गोपम् ।

पार्थं च बालमवयत्य नियोद्धुकामो
　　वव्रे समीरणसुतं श्रुतबाहुसारम् ॥ 17

भार्यां वरस्त्रिदशवामदृशां कुमारं
　　राज्यश्रिया वरमसौ विरचय्य धीमान् ।
भीमं भुजप्रहरणे दृढबद्धकक्षं[1]
　　वृत्रो बिडौजसमिवाभिजगाम वीरः ॥ 18

तौ मण्डलेषु विविधेषु कृतप्रचारौ
　　पादाभिघातपरिकम्पितमेदिनीकौ ।
मुष्टिस्वनेन मुषितामरसाधुवादौ
　　वीरौ नियुद्धमतिदारुणमादधाते ॥ 19

इत्थं नियुध्य दशपञ्चदिनानि खिन्नो
　　पुनः स्मृतस्य पवनस्य पितुर्बलेन ।
भीमो बृहद्रथसुतं रभसादभाङ्क्षी-
　　त्कारागजुषां सह शुचा वसुधाधिपानाम् ॥ 20

निस्तीर्य मागधमहोदधिनागतांस्ता-
　　नालिङ्ग्य नान्प्रणमतः प्रमदाश्रुवर्षी ।
इष्ट्यां त्रिशङ्कुतनयस्य विधाप्यमानो
　　निर्विघ्नमेव[2] मखवर्यमसंस्त पार्थः ॥ 21

नीत्वा दिनानि कतिचिन्निजराजधानीं
　　याते ऽथ तेन महता सह यादवेन्द्रौ ।
आदिक्ष[illegible]वर्गपमसौ विधित्सु
　　राजा विजेतुमनुजांश्चतुरश्चतस्रः ॥ 22

---

1. [illegible] B. C.　　2. निर्विघ्नमेव A.

निर्याणतूर्यरवकम्पितचक्रवालः
पुत्रः पुरन्दरदिशं मरुतः प्रतस्थे ।
त्यक्त्वा भुवं विविशुरुच्चलितः पुरस्ता
त्तत्सैन्यपांसव इवाद्रिगुहा दशार्णाः ॥ 23

संस्थापयन्स विजयी पुरि तत्र तत्र
स्तम्भानिव क्षितिभुजां धृतनामवर्णान् ।
अङ्गेषु कृतसमरादहिमांशुसूनोः
सार्धं जयेन विविधानि धनानि लेभे ॥ 24

हृत्वा भयं वसु च काशिपतेस्स गच्छन्
वीरो विजित्य युधि पौण्ड्रकवासुदेवम् ।
वङ्गेषु तद्द्विरदशोणितसिन्धुपूरैः
स्रोतांसि जह्नुदुहितुर्द्विगुणानि चक्रे ॥ 25

तत्तन्नरेन्द्रकटकार्जितमर्थजात
मारोप्य कुञ्जरशतेषु कलिङ्गभर्तुः ।
अब्धेर्विजित्य जयशङ्खरवेण घोष
मावर्ततानिलसुतः ककुभो मघोनः ॥ 26

पार्थस्तु खाण्डवविभावसुधूमगन्ध-
संस्पृष्टकेतनपटेन रथेन धन्वी ।
विस्तारयन्वियति सैन्यरजोवितान
माशां विजेतुमलकाभरणामयासीत् ॥ 27

साल्वादिभिर्नृपतिभिश्शरवर्षभीतै
रथैरुपर्युपरि शक्रसुतोऽभिवृष्टः ।
प्राग्ज्योतिषाधिपतिना विहिताहवेन
सम्भावितो यवनपद्मवनद्विपोऽभूत् ॥ 28

आप्लावितानि पुरभिच्छिरसः पतन्त्याः
स्रोतोभिरभ्रसरितो [1]न यान्यभूवन्[1] ।
तानि स्फुरत्कलकलानि बलानि जिष्णो
राचक्रमुर्हिमवतः कटकान्तराणि ॥ 29

तस्योच्छ्रितेषु शिखरेषु स पार्वतीयान्
जित्वा गणान्विशिखनिर्दलिताश्मवर्षः ।
वन्येभकुम्भमणिदन्तविपाण्डुराणि
लेभे धनानि च यशांसि च दुर्लभानि ॥ 30

सैन्यद्विपोद्दलितमानसपद्मषण्डं
गन्धर्वमण्डलजयाय ततः प्रयान्तम् ।
प्रत्युद्ययुर्निषदनिर्झरशीकरार्द्रा
स्तं हेमकूटतटकाननगन्धवाहाः ॥ 31

निर्जित्य चित्ररथसैन्यपतिं गृहीत्वा
तद्वाजिनस्तरुणतित्तिरिचित्रकायान् ।
पार्थेन किम्पुरुषवर्णितपौरुषेण
मेरुर्नमेरुतरुचारु तटः प्रपेदे ॥ 32

भास्वत्तुरङ्गखुरचन्द्रकितोपलेऽस्मि[2]
न्नभ्रंलिहाग्रविटपामवलोक्य जम्बूम् ।
तच्छायायापहृतसैनिकमार्गखेद
श्शुश्राव तुम्बुरुमुखेन भुजापदानम् ॥ 33

जम्बूफलस्रुतरसप्रसरप्रवृत्तां
दिव्यां नदीमनुसरन्मणिसैकताङ्काम् ।
जाम्बूनदोपहरणाकुलचारणोऽयं
प्राविक्षदुत्तरकुरूनरदुष्प्रवेशान् ॥ 34

---

1-1. विपिनान्यभूवन् B. 2. ०चन्द्रकदन्तुरेऽस्मिन् B. Cv.

उद्धृत्य[1] जानपददत्तकरोऽधिरूढः
पुंसां शिरांसि विजिगीषुतयोद्धतानाम् ।
जित्वा धनेशमपि दूरगतं धनैस्स्वैः
तस्याधिको निववृते सुरराजसूनुः ॥ 35

यत्रोपशान्तमहसौ शशिवासरेशौ
सार्धं ग्रहैर्नियमतोऽस्तमयं भजेते ।
आशां व्रजन्सह बलैर्विजयानुजस्ता
मापद्यतोदयमभीक्ष्णमुदग्रतेजाः ॥ 36

तत्र त्रिगर्तशिबिमद्रमयूरकेभ्यो
लब्ध्वा धनानि निजकार्मुकनिर्जितेभ्यः ।
पत्याऽपि मानितभुजामहिमा यदूनां
प्रत्याययौ बलरजःकलुषापराब्धिः ॥ 37

तस्यानुजस्तु रणसीमनि निर्जितेन
नीलादिना नृपगणेन निषेव्यमाणः ।
रामस्य पर्युषितमारचयन्प्रतापं
शूरो दिशं प्रतिजगाम सुवेलचिह्नाम् ॥ 38

शृङ्गाश्मलक्ष्यकलशोद्भवपादमुद्रे
विन्ध्ये गिरौ विरचयन्कतिचिन्निवासान् ।
रेवातटद्रुमनिबद्धचमूगजेन्द्रैः
भूयः प्रवृद्धशिखरं तममंस्त नेता ॥ 39

सह्यात्मजातटपथेन विगाह्य चोला
न्यातस्य पूगकुहली मधुदुर्दिनार्द्रा ।

1. तत्रापि A.

सेनारथध्वजपटा श्रवणानिलेन
पाण्ड्योपहारकरिणामभजन्त शोषम् ॥ 40

तस्याज्ञया तटगतस्य महाम्बुराशे
र्लङ्कापुरं प्रतिगतेन घटोत्कचेन ।
आनिन्यिरे दशमुखावरजेन दत्ता
रत्नव्रजैस्सह चतुर्दश हेमतालाः ॥ 41

आदाय तान् स विजयध्वजदण्डकल्पान्
प्रत्यागतः कुरुपुरं नकुलानुजातः ।
धर्मात्मजस्य यजनार्थमथाहृतार्थैः
श्रुत्यर्थतामुपगतो हरिराजगाम ॥ 42

तस्योपलभ्य मुरशासितुरभ्यनुज्ञां
कृष्णासखेन महितेऽहनि दीक्षितेन ।
प्राग्वंशसीमनि नृपेण परिष्कृतायां
प्रावर्तत क्रतुरशेषमहर्षिजुष्टः ॥ 43

आमन्त्रितैस्त्वरितमापतितैर्हरिद्भ्यः
प्रेक्ष्यो यथा नृपतिभिस्स बभूव यज्ञः ।
ऋत्विङ्मुखोच्चरितमन्त्रपदोपहूतैः
सङ्घैस्तथा मखभुजां च दिवोऽवतीर्णैः ॥ 44

आमोदनर्तितमहिद्विषमादधानः
खं व्यालिम्पन्नलघुरध्वरधूममेघः ।
व्यद्रावयत्त्रिजगदम्बुरुहाकरस्थं
पूर्वक्ष्मापतियशःकलहंसयूथम् ॥ 45

राजन्यकेन विबुधैरुपदासहस्रै
राराधितः प्रतिदिनं नरनाथवर्यः ।

इष्टाभिराहुतिभिरातनुत प्रहृष्टान्
सर्वान्सुरान् क्षितिसुरानपि दक्षिणाभिः ॥ 46

अध्वर्यग्रहेण समितौ कुपितस्य तास्ता
वाचो विषह्य शतशः परुषाश्च हेतीः ।
चेदीशितुः शिरसि चक्रधरेण कृत्ते
निर्विघ्नमेव निरवर्तत सप्ततन्तुः ॥ 47

द्वैपायनप्रभृतयोऽवभृथाप्लुतेन
सत्कृत्य तेन मुनयो विभुना विसृष्टाः ।
संभाविता नृपतयो विहितप्रणामा
भीष्मादयश्च कुरवः स्वपुराणि जग्मुः ॥ 48

दुष्प्राप एष भवतः कृपया महीयान्
प्राप्तो मया मख इति स्वयमूचिवांसम् ।
सम्राजमेनमवनीशशतार्चितांघ्रि
मापृच्छ्य चैद्यरिपुरात्मपुरं[1] प्रतस्थे ॥ 49

आसाद्य हस्तिनपुरं धृतारष्ट्रसूनु
र्दायादभूतिमतुलामनुचिन्त्य भूयः ।
क्रोधेन हन्त समतप्यत दुस्सहेन
स्वेनेव कालभुजगो विषपावकेन ॥ 50

गांधारमाह रहसि प्रचुराभ्यसूयो
राज्येन किं मम फलं सहजैः किमेभिः ।
किं वा भवद्भिरपि मातुल भीष्ममुख्यै
रुत्कर्षवद्भिरधुना यदभावि पार्थैः ॥ 51

---

1. दैत्य॰ A.

आपूर्वपश्चिमपयोनिधितीरलेख
मामेरुलङ्घमवनीवलयस्य जेतुः ।
साम्राज्यसम्पदमुदीक्ष्य युधिष्ठिरस्य
शान्तिं व्रजामि न कदाचिदमर्षतप्तः ॥ 52

किं च प्रदर्शयति धर्मसुते सभां स्वां
दृष्ट्वा मणिस्थलधिया पतितं सरस्याम् ।
यन्मां जहास पतिभिस्सह याज्ञसेनी
तच्छल्यवन्मनसि सम्प्रति वर्तते मे ॥ 53

शूरास्तदद्य रचयन्तु समं बलौघैः
कर्णादयस्समरसन्नहनाय यत्नम् ।
शातैश्शरैरसुहृदो युधि शाययिष्ये
तेषामुतायुधविकीर्णवपुश्शयिष्ये ॥ 54

तं प्रत्युवाच शकुनिः कृतमाहवेन
देवैश्शतक्रतुमुखैरपि ते न जय्याः ।
जित्वा मया तु विहितेन दुरोदरेण
निस्सम्पदः पुनरमून्कुरु दास्यभाजः ॥ 55

उद्गीर्णमित्थममुना कितवेन सार्धं
मन्त्रं दुरन्तमवदत्पितुरेष हृष्टः ।
प्रेम्णा सुतं प्रतिकृतेन विधेर्बलेन
पार्थप्रियोऽपि स तथैव तमन्वमंस्त ॥ 56

निर्माय काञ्चनसभां मणिभिर्विचित्रां
तद्दर्शनोत्सवमिषादुपनीय पार्थान् ।
दुर्देवनाहृतधनान्स विधातुकामः
क्षत्तारमादिशदथाऽऽनयनाय तेषाम् ॥ 57

श्रुत्वा तदागमनहेतुमजातशत्रु-
वैरं दुरोदरविधावपि शङ्कमानः ।
चक्रे मतिं सपदि चेतसि गन्तुमेव
दैवं हरत्यहितकाङ्क्षि विवेकमुद्राम् ॥ 58

स भ्रातृभिस्सह गतः कुरुराजधानीं
संस्कारपूर्वमथ बन्धुतया समेतः ।
कृष्णा च कौरववधूरखिलास्स्वलक्ष्म्या
ताराः प्रभेव तपनस्य तिरश्चकार ॥ 59

नीत्वा गृहेषु तदहः परिबर्हगर्भे
ष्वन्येद्युराशु रचिताखिलसान्ध्यकृत्याः ।
पार्थास्सभां प्रविविशुः कितवैस्सनाथां
क्रूरैर्ग्रहैः परिचितामितरे यथा द्याम् ॥ 60

आलोक्य धर्मतनयं शकुनिर्जगाद
द्यूतं वयस्यवर साम्प्रतमाचराम ।
साम्राज्यमास्थितवतां सुखिनां नृपाणा
माचक्षते ननु विनोदमिदं विदग्धाः ॥ 61

राजा तमभ्यधित मातुल वैरिहेतुः
किं कीर्त्यते कितव कृत्यमिदं त्वयैवम् ।
अस्मान्विजेतुमभिवाञ्छसि चेत्किमक्षैः
शस्त्रं गृहाण युधि विक्रमिणां हि कीर्तिः ॥ 62

भूयस्तमाह शकुनिः प्रियदेवनेऽस्मि
न्नाशङ्क्यतामपरथा भवता न किञ्चित् ।
स्याद्वैशसं यदि नृप क्रियतां निवृत्ति
र्जागर्ति शश्वदधिकर्द्धिरपायशङ्कि ॥ 63

तं प्रत्युवाच कुपितः कुरुवंशकेतु
द्यूते रणे च विमतैः कितवैश्च वीरैः ।
आहूत एष न जनः कुरुते निवृत्तिं
सज्जोऽस्मि लोभरहितः प्रतिदेविता कः ॥ 64

तावच्च देवनविधेः सुबलस्य सूनुः
कर्ता पणावहृतेषु सुयोधनोऽभूत् ।
वैषम्यमाकलयतापि युधिष्ठिरेण
स्वेनैव तद्द्वयमपि प्रतिपन्नमासीत् ॥ 65

प्रज्ञादृशः क्षितिपतेः पुरतस्सभायां
प्रत्येकमासनगतेषु नराधिपेषु ।
धर्मात्मजश्च कुरुनन्दनमातुलश्च
क्षत्रान्तहेतुमथ देवनमादधाते ॥ 66

तेनानुदेवनमसौ विजितश्शठेन
भूषारथद्विपहयान्परिचारकांश्च ।
कोशालयांश्च[1] दिशति स्म पुरोऽभिरामां
कृत्स्नां च भूमिमपहाय धनं द्विजानाम् ॥ 67

पुत्रेषु तेषु पणितेषु जितेषु पश्चा
न्माद्रीसुतौ च मतिरूपविशेषवन्तौ ।
पार्थं च विक्रमनिधिं जितनिर्जरेन्द्रं
भीमं च सत्वनिलयं शकुनिर्विजिग्ये ॥ 68

आत्मन्यथ ग्लहतया विहिते जिते च
हृष्टेन दुष्टमनसा सुबलात्मजेन ।

---

1. कोशाचलांश्च B.

कृष्णा तवास्ति धनमन्यदपीति पृष्टो
दीव्यामि सम्प्रति तयेति नृपो बभाषे ॥ 69

श्रुत्वा ततस्सदसि तस्य गिरं विभग्नो
भीमस्तु रोषभयगद्गदवागवादीत्[1] ।
धूर्तोऽपि नैवमनुतिष्ठति यत्प्रियां स्वा
मार्योऽयमन्यदिव वस्तु पणीकरोति ॥ 70

सर्वांश्च नः प्रणयिनीं च दुरोदरेऽस्मिन्
राजा स्वयं धनतया विनयोक्तुमीशः ।
तूष्णीकभावमवलम्ब्य हिडिम्बवैरि
न्नास्तां भवानिति मरुत्सुतमाह पार्थः ॥ 71

कृष्णां विजित्य शकुनौ कृतसिंहनादे
[2-]हृष्टो हसन्कुरुसुतस्सह[-2] सूतजेन ।
भद्र त्वमानय वधूमिह पाण्डवानां
दासीं विधास्य इति वेत्रिणमाबभाषे ॥ 72

आनीतया झटिति तेन तथेति गत्वा
पाञ्चालराजसुतया स्थितया सभान्ते ।
बाष्पाम्बुशीकरमुचा धृतराष्ट्रजाना
मुत्पातवारिधरलेखिकया बभूवे ॥ 73

सा लज्जितैकवसना शनकैरवादी
न्नाहं जितास्मि कितवैर्न च मेऽस्ति दास्यम् ।
यत्पूर्वमेव विजितः परतन्त्रवृत्तिः
क्षोणीपतिस्तु पणकर्मणि मामकार्षीत् ॥ 74

---

1. ०भृश० A. 2-2. हृष्टोऽभवत् – B.

श्रुत्वा गिरं रविसुतः प्रहसन्नवादी
त्पाञ्चालि किं न विजितासि न किं नु दासी ।
आयाहि मार्जय गृहं तव लज्जयालं
ख्यातास्यनेन दयिता कुलटेव भूमौ ॥ 75

किञ्च ब्रवीमि हितमेव हृतार्धराज्यान्
दासेरकान्पुनरमूनवमत्य पार्थान् ।
एकं वृणु प्रणयिनं कुरुनन्दनेषु
संबन्धमात्मसदृशं द्रुपदश्च यायात् ॥ 76

दुश्शासनस्तदनु तां पुरतः पतीना
मानेतुमात्मसविधं प्रहितोऽग्रजेन ।
अभ्यद्रवत्स्रजमिव त्वरितं ग्रहीतुं
नामंस्त कालभुजगीं बत मूढचेताः ॥ 77

आयान्तमेनमवलोक्य भयाकुलाक्षी
दुद्राव वल्गितकुचं द्रुपदस्य पुत्री ।
तां राजसूयसवनावभृथाप्लुतेषु
केशेषु सोऽपि तरसानुपतन्नगृह्णात् ॥ 78

आकृष्टकुन्तलभरच्युतमाल्यकीर्णां
तां श्रावयन् श्रुतिकटूनि वचांसि शश्वत् ।
वामस्तदीयमयमारभतापहर्तुं
चण्डस्समीर इव शारदमम्बुवाहम् ॥ 79

ज्येष्ठानुवर्तनपरानवबुध्य भर्तॄ
न्मन्द्रोष्मणस्सदसि भीष्ममुखांश्च वृद्धान् ।
आक्रन्दति स्म शरणं यदुनाथमुच्चै
राकृष्यमाणवसना चपलेन साध्वी ॥ 80

विस्रंसि रत्नरशनाकिरणानुविद्धं
दुश्शासने हरति हन्त दुकूलमस्याः ।
भक्तार्तिभञ्जनपरस्य हरेः प्रसादा
दाविर्बभूवुरपराण्यपि तादृशानि ॥ 81

राशीभवत्सु सिचयेषु विकृष्यमाणे
ष्वासीदयं वितथयत्नतया विलक्षः ।
निन्दाकराश्चिरममुष्य विहीनवृत्तेः
सन्तस्तदा सदसि विस्मयिनो बभूवुः ॥ 82

गर्जन्प्रियानिकृतिमारुतघट्टनेन
भीमाम्बुदः क्षरितघर्मपयःकणौघः ।
तं राजवंशवनदाहनिदानभूतं
क्रोधं कृशानुमिव वैद्युतमुज्जगार[1] ॥ 83

क्रूरेक्षणान्तिकनिवासभुवा भियेव
दूरं भ्रुवोर्युगलमुन्नतमुद्वहन्त्या ।
आलक्ष्यत भ्रुकुटिरस्य ललाटसीम्नि
क्रोधात्मकस्य नवधूमशिखेव वह्नेः ॥ 84

हृष्यद्भिरेष निबिडं पुलकप्ररोहै
रुद्दामकम्प्रमखिलं वपुरुद्वहन्त्या ।
आलिङ्गितोऽप्यनिलसूनुरमर्षलक्ष्म्या
पाञ्चालराजदुहितुः प्रमुदं वितेने ॥ 85

प्रक्षिप्तवज्रशकलांशुभरापदेशा
दागामिसङ्गरविहारमुदाहरन्तीम् ।

---

1. वैद्युतमाबभार B.

अर्चन्निवायमरुणाब्जनिभैरपाङ्गै
राद्राय संसदि गदां भ्रमयन्बभाषे ॥ 86

सर्वे नृपाः शृणुत सम्प्रति मत्प्रतिज्ञां
केशाम्बरग्रहणपातकिनः प्रियायाः ।
तस्याहवे नखमुखैः विदलय्य वक्षः
पास्यामि शोणितमिभस्य यथा मृगेन्द्रः ॥ 87

अध्यास्यतामयि तवोचित एष तूर्ण
मत्युद्धतोऽयमिह दर्शितवान्यदूरू ।
तच्चूर्णयिष्यति सुयोधनमेनमूर्वोः
सङ्ख्याहतानुजशतस्य गदाममेयम् ॥ 88

उत्थाय वासविरुदञ्चदमर्षसम्प
द्विष्फारयन्धनुरधिज्यमभाषतोच्चैः ।
सूतात्मजं सुतसुहृत्सहितं समीपे
शातैश्शरैश्शकलयिष्यति गाण्डिवो मे ॥ 89

श्रुत्वैवमुग्रमुभयोरपि वीरवाद
मन्धो नृपः कृपगुरुप्रमुखैर्नियुक्तः ।
कृष्णां क्षमस्व परिभूतिमिति ब्रुवाणो
धर्मात्मजाय जितमर्पयति स्म राज्यम् ॥ 90

आमादिताखिलधने प्रतियाति तस्मिन्
दुर्योधनः पितरमेत्य जगाद रुष्टः ।
सर्वे गता वयममी भवता नरेन्द्र
त्यक्त्वा स्वकार्यमहितैकसुखावहेन ॥ 91

बाल्यात्प्रभृत्यपकृता मयि बद्धवैरा
कृष्णापराभवमुदीक्ष्य कृतप्रतिज्ञाः ।

[1-]त्वत्तः परे[-1] पुनरपि प्रतिपद्य राज्य
मुन्मूलयेयुरचिरेण समूलमस्मान् ॥ 92

तस्मातिकूल्यमपहाय भवानिहास्तां
दीव्यामि सम्प्रति रिपूनुपहूय भूयः ।
मन्मातुलः कमपि चिन्तितवानुपायं
यास्यन्ति येन विलयं दृढविग्रहास्ते ॥ 93

अक्षैर्जितास्सदसि ये नववल्कभाज
स्ते द्वादशान्वसतु काननवासमब्दान् ।
अन्यं नयन्त्वविदिता रिपुभिर्यदीह
ज्ञाताश्चरेयु रमुनैव पुनः क्रमेण ॥ 94

आकर्ण्य संविदमिमां नृपतिः प्रहृष्यन्
गान्धारराजतनया[2] विनिवारितोऽपि ।
संदिश्य वेत्रिजनमानयते स्म पार्थ
मुल्लङ्घनाय नियतेर्भुवि कल्पते कः ॥ 95

क्षात्रे स्थितः पथि निवृत्य नृपोऽर्धमार्गे
प्राप्तस्सभां शकुनिमन्त्रमयग्रहेण ।
भूयोऽप्यदीव्यदवधीर्य गिरोऽनुजाना
माविष्ट एव कलिना[3] सुरकार्यहेतोः ॥ 96

अक्षान्विकीर्य शकुनिर्जितमित्यवादी
त्पार्थं प्रहर्षसलिलाकुललोचनान्तः ।
सौभ्रात्रवद्भिरनुजैस्सह सत्यसन्धो
जग्राह वल्कलमसौ जनतापशोकम् ॥ 97

---

1-1. पार्थो निजं A. 2. ०सुतया B. 3. विधिना B.

पार्थ त्वयेह भुवि कौरवनिर्जितायां
स्थातुं न युक्तमिति वादिनि सूतसूनौ ।
आपृच्छ्य बन्धुजनमश्रुजलाविलाक्षं[1]
निर्गच्छति स्म सहसा नृपतिस्सभायाः ॥ 98

निस्तीर्णसंविद इमे विजितारयस्त्वां[2]
द्रक्ष्यन्ति सम्पदमवाप्य सुतास्त्वदीयाः ।
आश्वासितामिति पृथां सपदि प्रवीराः
क्षत्तुर्निवेश्य भवने नगरान्निरीयुः ॥ 99

करधृतनिजशस्त्रास्सानुतापान्धभूप[3]-
प्रहितरथगतास्ते सोमवंशावतंसाः ।
प्रययुरनुचरन्तं पौरलोकं निवर्त्य
स्वमशिषदसपत्नं धार्तराष्ट्रश्च राज्यम् ॥ 100

इत्यगस्त्यपण्डितकृतौ बालभारते महाकाव्ये[4] सप्तमस्सर्गः ।

---

1. साश्रु॰ A.
2. निहृतारय स्त्वां A.
3. धृतनिजभुजशस्त्राः॰ B; Cv.
4. B. omits

# अष्टमस्सर्गः

कृतेऽथ किम्मीरवधे बकारिणा
वनं गतः काम्यकमस्तकण्टकम् ।
युधिष्ठिरो धौम्यमुखैस्सह द्विजैः
स्थितिं व्यधाद्द्वैतवनान्तिके चिरम् ॥ 1

ततोऽर्जुनस्सत्यवतीसुतान्मुने
रवाप्य विद्यामरिनिर्जयोत्सुकः ।
ययौ हिमाद्रिं तपसा प्रसाधिता-
त्पुरद्विषः पाशुपतास्त्रसिद्धये ॥ 2

विलङ्घ्य देशान्विविधान्व्यलोकय
त्स शैलराजं मृगनाभिगन्धिनम् ।
सदा हिमानीं दशदिक्प्रसारिणीं
बिभर्ति यः कीर्तिमिवात्मसम्भवाम् ॥ 3

तटेन्दुकान्तद्युतिशुभ्रमूर्तिषु
भ्रमत्सु यस्मिन् सुरगन्धहस्तिषु ।
विचिन्वती दन्तचतुष्टयेक्षणा-
न्निजं[1] पतिं वेत्ति कथंचिदभ्रमुः ॥ 4

अहर्पतेरस्तमितस्य सानुषु
स्फुटं विषक्तान्विषमाश्मकोटिषु ।

---

1. पतिं निजं B.

निशासु यः प्रज्वलितौषधिच्छला
दधाति रोचिश्शकलानितस्ततः ॥ 5

अहीश्वराश्वाससमीरणोद्धतै
र्विषाग्निभिः प्लोषजुषोऽगुरुद्रुमाः ।
दिशन्ति यस्मिन्निजधूमसम्पदा
नभश्चरीकेशभरस्य वासनाम् ॥ 6

तमिन्द्रकीले शिखरेऽस्य भूभृतः
कृताधिरोहं[1] कृतिनां पुरस्सरम् ।
पृषद्भिरश्मस्खलदूर्मिजन्मभि
र्हृताध्वखेदं विदधे वियन्नदी ॥ 7

तदन्तिके कुत्रचिदाश्रमे व्रती
जटा दधानोऽभिषवेण पाटलाः ।
स पल्लवापीडसनाथमौलिना
जगाम[2] साधर्म्यममर्त्यशाखिना ॥ 8

फलेन पर्णेन जलेन वायुना
स्थितिं शरीरस्य सकल्पयन्क्रमात् ।
उपोढकार्श्योऽधिकनिर्मलोऽन्वहं
बभूव पक्षे बहुले यथा शशी ॥ 9

कृशानुमध्ये प्रपदेन तिष्ठतो
निविष्टदृष्टेस्सवितुर्युदर्चिषि ।
उदस्तबाहोर्जपतोऽस्य केवलं
व्यलोक्यतस्पन्दनमोष्ठसम्पुटे ॥ 10

---

1. कृताधिवासं B.    2. अवाप C.

उदग्रतेजोऽभिहतैर्महर्षिभि-
निवेदिते तादृशि सव्यसाचिनि ।
हरेण भक्तार्तिहरेण तत्क्षणं
किरातरूपं प्रतिपन्नमुत्तमम् ॥ 11

कपर्द एवास्य फणीन्द्रबन्धनो
द्युसिन्धुगर्भश्शशिखण्डमण्डनः ।
बभूव बद्धो नवबर्हमालया
सगर्भको मौलिरुदूढकेतकः ॥ 12

द्विपेन्द्रदानद्रवतुल्यकान्तिना
गलप्रभायाः प्रसरेण कर्बुरे ।
अभूदमुष्यातिपृथुन्युरःस्थले
नरास्थिमाला नवमौक्तिकावलिः ॥ 13

तदेव नागाजिनमन्तरीयतां[1]
गतं वसानः शरदम्बुदच्छविः ।
धनुर्वहन्कोटिविलम्बिचामरं
हरः प्रतस्थे हरिसूनुसंमुखम्[2] ॥ 14

परिस्फुरत्पल्लवपाटलांशुका
प्रकोष्ठडोलायितकाचकङ्कणा ।
उरोजयोः कुञ्जरकुम्भतुल्ययो
र्युगेन गुञ्जाफलदाम बिभ्रती ॥ 15

मनश्शिलापङ्कललाटचारुणा
सदन्तताटङ्करुचा मुखेन्दुना ।

---

1. कृष्णाजिन० A; सिंहाजिन० B. 2. ०सम्मुखः B.

जयोपनीतं गुहवाहनच्छदं
नवं नयन्ती श्रवणावतंसताम् ॥ 16

प्रफुल्लवन्यप्रसवावमालिनी
समानवेषैस्सहिता सखीजनैः ।
नितम्बभारालसमन्थरैः पदै
रनुप्रयाति स्म गिरीशमम्बिका ॥ 17

अनुद्रुतौ लुब्धकवेषधारिभि
र्गणैर्गृहीतश्रुतिविश्वकद्रुभिः ।
परस्परालोकननिर्वृतौ शिवौ
हिमाचलप्रस्थपथेन जग्मतुः ॥ 18

विभौ परिष्कुर्वति सानुमात्मना
गिरिस्तदा शान्तनिनादनिर्झरः ।
अभूदरण्योज्झितदावविप्लवो
निरुद्धनीरन्ध्रतुषारदुर्दिनः ॥ 19

मनोज्ञवेषं मिथुनं तदादिमं
विलोकितं व्योम्नि विमानचारिभिः ।
द्रुमाधिरूढा वनदेवताः पुरः
प्रकीर्णपुष्पाञ्जलयो ववन्दिरे ॥ 20

प्रकीर्णकन्दर्पचितान्तभस्मभि
र्विमोहितोपान्तमृगस्य मारुतैः ।
उमाहरौ स्थाणुवनस्य दर्शने
बभूवतुर्नम्रमुखौ विलोकितौ ॥ 21

सकर्णिकारच्छविरम्बिकासखो
वनं मधुर्मूर्त इव प्रसाधयन् ।

गणानवस्थाप्य तपोवनाद्बहि
स्समीपमापद्यत सव्यसाचिनः ॥ 22

प्रदर्शितो दूरत एव शम्भुना
तपश्चरन्नंसविषक्तकार्मुकः ।
कृशाकृतिः पाण्डुसुतः कृपाजुषा
महोध्रपुत्र्या मनसान्वगृह्यत ॥ 23

अथाऽऽपतन्तं धृतसूकराकृतिं
खुराहतग्रावविनिर्यदर्चिषम् ।
स घोरघोणादलितान्तिकद्रुमं
जिघांसुमालोकत मूकदानवम् ॥ 24

स तं विदित्वाऽसुरमेव कंचन
द्विषा नियुक्तं स्वतपोविघातुकम् ।
विहन्तुकामः पदमुच्छ्रितं निजं
क्षितौ निचिक्षेप शरं च कार्मुके ॥ 25

हरेण चागत्य विकृष्टधन्विना
ममैष लक्ष्यं[1] न निहन्यतामिति ।
निवार्यमाणोऽप्यवमत्य तद्वचो
मृषावराहे प्रजिधाय सायकम् ॥ 26

तरस्विना तेन समं महाद्युतिः
पपात तस्मिन् गिरिशोज्झितः शरः ।
प्रकाशिताशेषदिशोऽपराचले
सहातपेनेव सहस्रदीधितिः ॥ 27

---

1. ममेषुलक्ष्यं A.

उदग्रदंष्ट्राङ्कुरवैद्युतद्युतिं
　　शरावुभावुज्झितघर्घरारवम् ।
विमर्दयामासतुरुग्ररंहसौ[1]
　　घनं समीराविव पूर्वपश्चिमौ ॥ 28

मृते मृगे शर्वमुवाच फल्गुनः
　　किरात जानासि न लुब्धकक्रमम् ।
यदत्र विद्वेषिणि लक्षिते मया
　　निपातितः प्राग्भवता शिलीमुखः ॥ 29

ततस्स तं सस्मितमेवमब्रवी
　　द्वने मदीये बहुसत्त्वसंकुले ।
सहाङ्गनाभिर्मृगयाविधायिना
　　मया मृगो दूरममावनुद्रुतः ॥ 30

दयापरस्य त्वयि मे शरो महा
　　नपातयिष्यत्प्रथमं न चेदमुम् ।
तवैष बाणं प्रतिहत्य घोणया
　　तपोधनं त्वामहनिष्यदुद्धतः ॥ 31

इदं वचस्तस्य निशम्य दुःश्रवं
　　मृषाकिरातस्य रुषारुणेक्षणः ।
मुखेन्दुना भ्रूकुटिभङ्गलक्ष्मणा
　　पुनर्जगाद स्फुरदोष्ठमर्जुनः[2] ॥ 32

वनेचरस्त्वं गिरिकन्दरास्पदो
　　न वेत्सि पुंसो भुवि बाहुशालिनः ।

---

1. विनाशयामासतु॰ B.　　2. स्फुरितोष्ठ॰ B.

विकत्थनं त्वां पुरतो मृगीदृशां
नयामि बाणैरिह पोत्रिणो गतिम् ॥ 33

इति ब्रुवन्नीषदमर्षचुम्बितै
रितस्ततः पारिषदैर्विलोकितः ।
किरन्पृषत्कानिषुवर्षिणाऽऽहवं
वृषध्वजेनाऽक्रुत वानरध्वजः ॥ 34

विहायसि च्छादितदिग्भिरावृते
पिनाकगाण्डीवविनिस्सृतैश्शरैः ।
क्षणेन निश्शेषमिवाथ चूर्णिता
रवेरलक्ष्यन्त न कुत्रचित्कराः ॥ 35

[1-]तदा त्रिनेत्रज्वलनोष्मतापिताः[-1]
कपर्दसिन्धोः परिपीतपाथसः ।
फणामणीनां कषणेन भोगिनां
शिलीमुखाः शातमुखाः किरीटिनः ॥ 36

पुरा पुरारिर्मृदुसम्प्रहारवा
न्मुनेर्दृढाकृष्टशरासनच्युताः ।
प्रहृष्टरोम्णा वपुषा शरावली
र्बभार भक्त्येव निवेदिताः स्रजः ॥ 37

निषङ्गबाणेषु गतेषु सङ्क्षयं
नितान्तमक्षीणसमीककौतुकः ।
पतिं पशूनामवरोपितज्यया
स चापयष्ट्या प्रजहार फल्गुनः ॥ 38

---

1-1. ललाटनेत्र॰ B.

स निर्दयैर्गाण्डिवताडनैर्यथा
मुदं दधौ मूर्ध्नि विमर्दितेन्दुभिः ।
तथा न लीलाकलहेषु सन्नतः
पदप्रहारैर्दुहितुर्महीभृतः ॥ 39

विशीर्णगङ्गाम्बुकणानुषङ्गिणा
सुधानिषेकेण तुषाररोचिषः ।
प्रवीरचापाहतिमूर्च्छिताः[1] प्रभो[2]
रुदश्वसन्मौलिगता महोरगाः 40

ततः प्रभावेन हृते च कार्मुके
रजोविमृष्टक्षतजार्द्रपाणिना ।
स्थिरो भवेति ब्रुवता किरीटिना
किरातनाथस्सुचिरं न्ययुध्यत ॥ 41

हरार्जुनौ मुष्टिभिराहतौ मिथो
भुजाभिराश्लिष्य भुवं गतावुभौ ।
गिरिश्चलन्नुत्कटनिर्झरस्रुति-
र्दधौ कथंचिद्भुजगेन्द्रधारितः ॥ 42

सुमेरुवप्रप्रतिमेन वक्षसा
निपीड्य मुक्तः शबरेण मूर्च्छितः ।
स लब्धसंज्ञः पुनरुत्थितो जयं
चकाङ्क्ष तस्यार्चनया पुरद्विषः ॥ 43

स मन्त्रवत्सैकतलिङ्गमूर्धनि
न्यधत्त यद्यत्कुसुमं वनाहृतम् ।

---

1. स वीर० A. 2. विभोः A.

सविस्मयस्तत्तदरालकुन्तले
पुलिन्दभर्तुः शिरसि व्यलोकयत् ॥ **44**

स तस्य हर्षादुपपत्य[1] पादयोः
कृतप्रणामस्य पुरः प्रसेदिवान् ।
वरोक्षमास्थाय[2] निषेवितो गणै
रुमासखस्सन्निदधे दयानिधिः ॥ 45

कृतं विमर्दं युधि दारुणं मम
क्षमस्व देवेति वदन्तमर्जुनम् ।
तवास्मि तुष्टो नतमौलिसिन्धुभि
र्धनुःप्रहारैरिति शम्भुरब्रवीत् ॥ 46

यथा पुरं सन्निहिते शरासने
निषङ्गयुग्मे च पृषत्कपूरिते ।
स मन्त्रपूर्वं ज्वलदूर्ध्वलोचनं
स्वकीयमस्त्रं विततार जिष्णवे ॥ 47

तिरोहितेऽस्मिंत्सह भूतसैनिकै
स्स लब्धवानस्त्रमनन्यदुर्लभम् ।
न केवलं भीष्ममुखाञ्जितान्कुरू
नमंस्त लोकांत्ससुरासुरानपि ॥ 48

ततः पतिभ्यः पितृयक्षयादसां
प्रहृष्टमस्त्राण्युपलभ्य पाण्डवम् ।
निजानि च प्रापयितुं कुतूहली
निनाय नाकं स्वरथेन वासवः ॥ 49

---

1. ॰दुपस्त्य B. 2. महोक्षं॰ B.

स तत्र निष्पन्दविलोचनोत्पलै
विलोकितस्सस्पृहमप्सरःकुलैः [1] ।
अधिष्ठितोऽर्धासनमस्य सन्ततं
ययौ जयन्तादपि माननीयताम् ॥ 50

कृताभिसारां स कदाचिदूर्वशीं
स्मरस्य मूर्तामिव शस्त्रदेवताम् ।
उपाचरन्मातृवदादृतो वशी
शशाप सा वर्षवरो भवेति तम् ॥ 51

निशम्य वृत्तान्तमिमं सविस्मयो
रहस्तमाहूय च सत्कृतं सुरैः ।
त्रयोदशे शापमुपैतु हायने
भवानिति व्याहरदात्मजं हरिः ॥ 52

गुरोस्स तस्माद्बलवत्प्रहृष्यतः
कृतास्त्रजातः कृतलक्षणाग्रणीः ।
क्रमेण गन्धर्वपतेस्सुहृद्वरा
दवाप सङ्गीतकलासु कौशलम् ॥ 53

दिवोऽवतीर्णादुपगम्य[2] रोमशा
दुदन्तमस्याद्भुतमूढसंमदः
युधिष्ठिरस्सावरजस्सहामुना
निनाय कालं भुवि तीर्थसेवया ॥ 54

क्रमादुदीचीं दिशमेत्य पाण्डवाः
पुलिन्दभर्तुः[3] पुरि वारितानुगाः ।

---

1. अप्सरोगणैः B. 2. ०अवगम्य B. 3. कलिन्द० B.

घटोत्कचस्कन्धगता गिरीन्बहू
न्विलङ्घ्य भेजुर्बदरीतपोवनम् ॥ 55

नरेण नारायणसङ्गतेन ते
महर्षिणा सत्कृतिपूर्वमीक्षिताः ।
हतैनसः पार्षदकन्यया समं
चिराय तत्र न्यवसन्महौजसः ॥ 56

कदाचिदादाय नभस्वदाहृतं
सुगन्धिसौगन्धिकमेकमुज्ज्वलम् ।
अयाचतान्यानि च तादृशानि सा
कुतूहलेन प्रियसाहसं प्रियम् ॥ 57

तथेति तद्गन्धहरानुसारिणा
गदासहायेन धनुष्मताऽमुना ।
वनानि जङ्घाजवभग्नशाखिना
हतेभयूथेन पथा ललङ्घिरे ॥ 58

अपश्यदाग्रे कदलीवनास्पदं
निशाचरास्त्रव्रणकन्दराचितम् ।
असौ मरुन्मानितमञ्जनात्मजं
पतिं गिरीणामिव गन्धमादनम् ॥ 59

कपिस्तदस्मै प्रथमं दिदृक्षवे
वपुर्निजं वारिधिलङ्घनक्षमम् ।
अदर्शयत्खेचरदृष्टिगोचरं
ततस्सरोवर्त्म च हृष्टमानसः ॥ 60

स तेन गच्छन्निभृतत्वमात्मनः
प्रकाशनं रामकथोक्तिचातुरीम् ।
वपुश्च विन्ध्योपमितं हनूमतो
विभावयन्दिव्यमथासदत्सरः ॥ 61

कुबेरयोषित्कुचमर्दितोर्मि त
त्प्रविश्य कल्हारशतानि साहसी ।
नखैर्लुनाति स्म तदीयरक्षिणां
शरैश्च तत्रोत्पलकाननानि सः ॥ 62

स्वशौर्यविद्रावितयक्षसैनिकः
सरस्तटे तत्र घटोत्कचाहृतैः ।
अयुज्यत भ्रातृभिरर्जुनाग्रजो
निजाश्च सौगन्धिकसञ्चयैर्वधूः ॥ 63

कदाचिदस्मिन्मृगयावनं गते
जटासुरस्त्रीन्धनदाद्रिवर्तिनः ।
जहार पत्न्या सह पाण्डुनन्दना
नृचेव वेदांस्स्वबलेन सोमकः ॥ 64

सुखेन[1] धावन्करभग्नपादपो
निजौजसा स्कन्धगतेन भूभुजा ।
निरुद्धवेगो विदधे मदोद्धतः
शिताङ्कुशेनेव गजो निषादिना ॥ 65

अथांसपीठादवतार्य पाण्डवान्
निशाचरः काननगर्भनिर्गतम् ।

---

1. जवेन॰ A.

स्फुरद्भुजास्फोटनिनादभीषणं
निर्योधयामास हिडिम्बवैरिणम् ॥ 66

बकद्विषा कृत्तमरत्निधारया
गभीरनिर्ह्रादि शिरो विरोधिनः ।
पपात निष्पिष्टतटद्रुमं गिरे
रुपत्यकासीमनि गण्डशैलवत् ॥ 67

ततस्तदुद्देशमपास्य पाण्डवा
निविश्य दिव्यर्षितपोवने क्वचित् ।
प्रतीक्षितश्वेततुरङ्गमागमा
श्चिरं धनेशस्य गिरौ विजह्रिरे ॥ 68

धृतास्त्रमाहूय सिताश्वमेकदा[1]
समीयुषां स्वस्य रणेष्ववध्यताम् ।
सुरद्विषामम्बुधिमध्यवर्तिनां
वधं ययाचे गुरुदक्षिणां हरिः ॥ 69

स तं प्रतिश्रुत्य तथेति वज्रिणे
वहन्किरीटं शिरसा तदर्पितम् ।
अधिष्ठितो मातलिसारथिं रथं
जगाम शृण्वन्दिविषज्जयाशिषः ॥ 70

विलङ्घ्य नीलाञ्जनिभं[2] वियत्पथं
सुवर्णवप्रच्छविकेसरावलिम् ।
अपश्यदग्रे हरिसूनुरासुरीं
मुदन्वदिन्दीवरकर्णिकां पुरीम् ॥ 71

1. कृतास्त्र० Cv. 2. नीलाम्बुधरं A; नीलाञ्जवनं B.

गतं मुखाब्जस्य मुदावहं[1] सतां
स देवदत्तं जलजं व्यपूरयत् ।
स्वनेन तस्याकुलसत्त्वमादधे
महार्णवेन त्रिदशद्विषत्कुलम् ॥ 72

स्वसिंहनादप्रसरेण भूयसा
प्रतिष्ठशङ्खध्वनयः किरीटिनः ।
पुरान्निरीयुः स्फुरदाहवादरा
स्त्रिकोटिसङ्ख्यास्त्रिदिवेशविद्विषः ॥ 73

क्षणेन ते शस्त्रभुजङ्गधारिणः
शताङ्गमातङ्गतुरङ्गयादसः ।
शराचिरस्त्रं परिवव्रुरर्जुनं
युगान्तवह्निं जलधेरिवोर्मयः ॥ 74

निरन्तरैर्गाण्डिवनिस्वनैर्दिशो
महासुराणां क्षतजेन सागरम् ।
सुतो यशोभिश्च हरेरपूरय
द्रसातलं भोगवतीजलामलैः ॥ 75

इत्थं निवातकवचांस्स निहत्य दैत्या
न्पातालतस्सह जयेन निवर्तमानः ।
भ्रातुर्वरेण दनुजैर्मनुजैरवध्यैः[2]
गुप्तं विहायसि हिरण्यपुरं रुरोध ॥ 76

पौलोमानथ बलिनश्च कालकेया
नापत्य प्रथनविधायिनो जिघांसुः ।

---

1. मराळकल्पं C; मुहूर्तहंसतां B. 2. अवार्यैः A.

स्मृत्वान्तः पशुपतिमन्त्रघोरमस्त्रं
प्रायुङ्क्त ज्वलितदिगन्तमिन्द्रसूनुः ॥ 77

कतिचिदुरगाः केचित्तार्क्ष्याः परे रजनीचराः
कतिचनगजाः केचित्सिंहाः परे च तरक्षवः ।
मुहुरुदयिनस्तस्मादस्त्रात्प्रमथ्य महासुरान्
पुरमपि च तत्स्वेन प्लुष्टं व्यतन्वत तेजसा ॥ 78

ततो नाकं यातो नयनगलदानन्दपयसा
विसृष्टस्संभाव्य त्रिदशपतिना भूषणशतैः[1] ।
शताङ्गेनाऽश्वानामवयवरुचा शाद्वलदिशा
सकाशं भ्रातॄणां त्रिदशविनुतः प्राप विजयः ॥ 79

अमुना सह गन्धमादनाद्रौ
निवसन्तस्सुचिरं सुखेन पार्थाः ।
त्रिदिवाय विसृज्य रोमशं ते
प्रययुर्द्वैतवनं पुनः प्रहृष्टाः ॥ 80

**॥ इत्यगस्त्यकृतौ[2] बालभारते महाकाव्ये[3] अष्टमस्सर्गः ॥**

---

1. ०गणैः B. 2. ०पण्डित० B. 3. B omits.

# अथ नवमस्सर्गः

तत्र स्थितान् जातु निशम्य पार्थान्
तेभ्यः श्रियं दर्शयितुं कृशेभ्यः ।
पतिः कुरूणां महता बलेन
जगाम लक्षीकृतघोषयात्रः ॥ 1

स स्मारणानन्तरमात्मसेनां
निवेशयन्द्वैतवनस्य पार्श्वे ।
गन्धर्वसैन्यैर्मघवन्नियुक्तै-
र्न्यरोधि विश्वावसुसूनुमुख्यैः ॥ 2

तेषां कुरूणां च कृतोद्यमानां
कृतान्तयज्वक्रतुराहवोऽभूत् ।
अनुक्षणं क्ष्वेलितमन्त्रहूतै
स्सान्निध्यमानीयत यत्र देवैः ॥ 3

वीणागुणान्वादयतामजस्रं
किं कार्मुकास्फालनकर्मणा वः ।
गन्धर्वयोधानिति भाषमाणो
विव्याध[1] राधातनयो विषाणैः[2] ॥ 4

तस्येषुभिर्विद्धसमस्तगात्रा-
नितस्ततो विद्रवतस्स्वसैन्यान् ।

---

1. रुरोध B. 2. विपाटैः B.

निवर्तयन्कार्मुकनिस्वनेन
तमभ्ययात्संयति चित्रसेनः ॥ 5

शरं शरेण क्षिपता विसृष्टं
प्रयुक्तमस्त्रेण निरस्यतास्त्रम् ।
मायाविना तेन महारथेन
पराजितः प्राद्रवदङ्गराजः ॥ 6

आगत्य[1] हृष्टोरगतार्क्ष्यवेगो
जितं[2] गृहीत्वा युधि रज्जुबद्धम् ।
रथे निचिक्षेप निजे स दिव्यः
कौरव्यमिन्द्रस्य हृदि प्रमोदम् ॥ 7

आदाय तं यात्सु नभश्चरेषु
क्रोशंस्तदन्तःपुरिकानिकायः ।
प्राग्वंशभाजं शशिवंशकेतु-
मजातशत्रुं शरणं प्रपेदे ॥ 8

कृताञ्जलीनां कृपणोक्तिगर्भा-
ण्युदश्रुपारिप्लवलोचनानि ।
मुखानि तासां रिपुसुन्दरीणा-
मालोक्य भीमः प्रहसन्नवादीत् ॥ 9

राज्ये स्थितः कौरव एष युक्तो
रिक्तान्बलौघैरिह केवलान्नः ।
आजघ्निवान्द्रष्टुमनेन दिष्ट्या
गन्धर्वभर्त्रा ह्रियते निबद्धः 10

---

1. आपात्य B. 2. दृढं B.

अस्माकमारभ्य शिशुत्वकेलि-
मनागसामारचितापकारः ।
यः पर्यभूत्संसदि याज्ञसेनीं
दुष्कर्मणस्तस्य फलं स भुङ्क्ते ॥ 11

इत्युक्तवन्तं तमुवाच राजा
वत्साधुना नार्हसि वक्तुमेवम् ।
दायादवर्गस्य परस्परस्य
स्थाने निकारः परतो हि निन्द्यः ॥ 12

युष्माकमग्रे सुरवांशिकेन
बद्धो हृतश्चेदयमीदृशोऽपि ।
जगत्त्रयेऽपि व्यपदेश्यताया
भवेन्न पात्रं भरतान्ववायः ॥ 13

तद्विक्रवत्वं शरणागताना
मासां वधूनां सहसापनेतुम् ।
शत्रोरमुं मोचयतात्तचापा
यशो महीयः किमतः परं वः ॥ 14

तथेति चादाय वृकोदराद्या
स्तच्छासनं सज्यशरासनास्ते ।
निरीयुरुद्योगमुदीक्ष्य तेषां
गन्धर्वयोधाश्च पुनर्निवृत्ताः ॥ 15

विमुञ्चथ भ्रातरमस्मदीयं
नचेच्छरैर्वश्शमयामि गर्वम् ।
इत्यर्जुनस्याऽविगणय्य वाचं
बाणानमुञ्चन्नसुयोधनं ते ॥ 16

समुत्पतन्तः पततां रयेण
तेषामिषून्पार्थशराः प्रतीयुः ।
आसारपातान्प्रलयाम्बुदानां
ज्वालाकलापा इव कालवह्नेः ॥ 17

विक्रम्य गन्धर्वपतिश्चिराय
शौर्येण हृष्टो विजयस्य सख्युः ।
तेनोचितज्ञेन समेत्य राज्ञो
जगाम पार्श्वं रुरुशृङ्गपाणेः ॥ 18

स सत्कृतस्तेन जगाद राजन्
हितैषिणस्ते वचसा मघोनः ।
इहागतं वैभवदर्शनाय
नयामि बद्धं युधि धार्तराष्ट्रम् ॥ 19

इत्युक्तवान्धर्मभुवोऽनुरोधा
दग्रे निधायास्य पतिं कुरूणाम् ।
सैन्यैस्समं शक्रसुतं प्रशंस-
न्प्रीतो दिवं प्रास्थित चित्रसेनः ॥ 20

तं रज्जुभिस्संयतसर्वगात्र-
मवाङ्मुखं दीनमुदीक्ष्य शत्रुम् ।
कराङ्गुलीसंवृतवक्त्रपद्मा
बलात्कुचं पार्थवधूर्जहास ॥ 21

नरेश्वरस्तं सहसा विमुक्तं
दरोच्छ्वसल्लोहितबन्धमार्गम् ।
मैवं पुनस्साहसमाचरेति
न्ययुङ्क्त गन्तुं कुरुराजधानीम् ॥ 22

गच्छन्त्समार्गे सहितोऽवरोधैः
प्रभातिकश्चन्द्र इवास्तकान्तिः ।
सैन्यानि गन्धर्वबलार्दितानि
न्यवीविशद्रोधसि निम्नगायाः ॥ 23

स तत्र बन्धूनवदत्समेता-
न्दत्तानमिलैरनुकम्पमानैः ।
त्यक्ष्याम्यसून्प्रायमिहास्थितोऽहं
वरं हि जीवन्निकृतस्य मृत्युः ॥ 24

यात्रामिमामुक्तवतो दुरन्तां
द्रष्टुं न शक्नोमि पितामहादीन् ।
सवाहनाः प्राप्य पुरं भवन्तः
कुर्वन्तु दुश्शासनमात्तराज्यम्[1] ॥ 25

आकर्ण्य तस्योदितमात्तभीति
र्दुश्शासनो दुःखनिमग्नचेताः ।
कृतप्रणामो नयनाम्बुधौतौ
विधाय पादाविदमाबभाषे ॥ 26

अनार्यगृह्यां शुचमार्य हित्वा
यथापुरं पाहि महीमशेषाम् ।
ज्याबद्धमुक्तः कृतवीर्यसूनोः
न किं शशास त्रिजगद्दशास्यः ॥ 27

अघं वदन्त्यात्मवधेन वृद्धा
धियं त्यजेमां सुधियामधीश ।

---

1. ०माभिराज्ये A.

प्रसीद पातुं पितरावनाथा
वत्सान्विषण्णान्सुहृदश्च दीनान् ॥ 28

कर्णोऽवदद्द्वेत्सि सखे न किञ्चि-
द्बिभर्षि हर्षावसरे विषादम् ।
यद् द्यूतदासैस्तव तत्र कृच्छ्रे
भर्तुः प्रियं पाण्डुसुतैर्वितेने ॥ 29

उत्तिष्ठ तावद्व्रतिनं भवन्तं
श्रुत्वा तु यावद्रिपवो हसेयुः ।
पुरीमृते त्वां क इहात्र गच्छे-
द्रविं विनास्ते दिवि किं प्रकाशः ॥ 30

उक्त्वैवमस्मिन्विरते सरोषं
गान्धारनाथो गिरमुज्जगाद ।
वृथा भवांच्छोचति वत्स मोहा
ज्जहाति शोकोपहतं हि लक्ष्मीः ॥ 31

स त्वं कृतघ्नोऽसि नचेन्नरेन्द्र
संरक्षितस्संयति पाण्डुपुत्रैः ।
मात्सर्यमुत्सार्य चिराय तेभ्यो
राज्यं मयोपाहृतमर्पयेति ॥ 32

इत्थं स तेषामवधूय[1] वाच
स्साकं विभूषाभिरलुप्तधैर्यः ।
प्रायोपवेशं धृतवल्कवासा
वाचंयमत्वेन समाललम्बे ॥ 33

---

1. परेषां A.

अपास्य वालव्यजनादिचिह्नं
तत्रैव पार्श्वे निभृतं वसन्त्या ।
सुस्निग्धयाऽसौ कुशतल्पशायी
न तत्यजे बन्धुतयेव लक्ष्म्या ॥ 34

तथाविधं तं निशि बन्धुभूता
दैतेयनाथा बलिसद्मभाजः ।
उत्पाद्य कृत्यामनया सवेग-
मानाययामासुरथात्मपार्श्वम् ॥ 35

अलं शुचा भद्र[1] जहीहि भीतिं
संशप्तकान्सम्यगनुप्रविष्टाः ।
वयं रणे भाविनि भारते ते
शत्रून्विजेष्यामह इत्यशंसन् ॥ 36

[2]-आश्वासितस्तैरसुरैः पुरेव
तत्कृत्यया प्रापितदर्भशय्यः-[2] ।
वधं प्रतिज्ञातवताऽर्जुनस्य
सख्या सह प्राप पुरं प्रहृष्टः ॥ 37

हतावशिष्टैर्मृगयासु सत्त्वै
र्भियेव रक्षाविधिमर्दितेन ।
दयालुना द्वैतवनं विहाय
राज्ञा पुनः काम्यकमाशु भेजे[3] ॥ 38

शुचौ महर्षेस्तृणबिन्दुनाम्न-
स्तपोवने तत्र चिरं वसन्तः ।

---

1. वत्स B. 2–2. आश्वासितस्तैरनुजेषु सर्वेष्वलं तथा प्रायमुपागतेषु A.
3. लेभे B.

कदाचिदाखेटरसेन कृष्टाः
पार्था दिशो जग्मुरधिज्यचापाः ॥ 39

अत्रान्तरे काम्यकमध्यभाजा
गच्छन्पथा साल्वपुरं बलौघैः ।
तपोवनद्वारि निरीक्ष्य कृष्णां
जयद्रथो मन्मथगोचरोऽभूत् ॥ 40

स तां गृहीत्वा प्रसभाद्रथं स्व-
मारोप्य सीतामिव राक्षसेन्द्रः ।
वचांसि तस्याः परुषाणि शृण्व-
न्प्रहृष्टचेताः प्रययौ निवृत्तः ॥ 41

वनादुपेत्याश्रममश्रुकंठ्या
धात्र्याः प्रियाया उपलभ्य वार्ताम् ।
प्रमन्यवः पाण्डुसुतास्तथैव
रथैस्सुवीराधिपमन्वधावन् ॥ 42

विगाह्य तत्सैन्यवनानि तेषां
राजन्यशार्दूलवधोद्यतानाम् ।
इतस्ततस्त्यादितशूरसिंहा
बभूव संयन्मृगयैव भूयः ॥ 43

ततो धृतिपार्थवधूं[1] च हित्वा
सौवीरनाथो हतबन्धुवर्गः ।
रक्षैर्बन्धुभिराचिताया
रणक्षितेरारभतापयातुम् ॥ 44

---

1. पाण्डुवधूं B.

सद्भिः क्रियेवापहृतान्तराया
ज्योत्स्ना चकोरैरिव मेघमुक्ता ।
रिपूज्झिता पाण्डुसुतैः प्रहृष्टा
पाञ्चालभर्तुर्दुहिता प्रपेदे ॥ 45

तया समं पार्थिवमाश्रमाय
प्रस्थाप्य भीमस्सह फल्गुनेन ।
पार्श्वद्रुमच्छिन्नपटध्वजेन
रथेन यान्तं रिपुमन्वधावत् ॥ 46

क्व जाल्म गच्छस्यधुनेति वक्तु-
र्विलोकनादस्य विजृम्भमाणः ।
त्रासो महांस्सिन्धुपतिं ससूतं
मम्रौ च रथ्यांस्त्वरयांबभूव ॥ 47

पार्थप्रयुक्तेषुहताश्वसूता-
द्रथादवप्लुत्य पलायमानम् ।
एणं तरस्वीव तरक्षुरेनं
जग्राह केशेषु जटासुरारिः ॥ 48

क्षितौ निपात्य प्रहृतं पदेन
सौवीरभर्तारमसौ जिघांसुः ।
भ्रातुर्निदेशं वदता दयालो-
र्निवारितोऽभूदनुजेन भीमः ॥ 49

भयाकुलं भल्लविमुक्तमौलिं
सपञ्चमौलीकमुखव्यलीकम्[1] ।

---

1. ०चूलीक० B.

आदाय तं तौ रथरज्जुबद्ध-
माजग्मतुः पार्श्वमजातशत्रोः ॥ 50

तं वीक्ष्य राज्ञा हसता नियुक्तः
पाञ्चालकन्यामनुमान्य हृष्टाम् ।
अवाङ्मुखं व्रीडभरादमित्रं
विमुक्तबन्धं विततान भीमः ॥ 51

त्वं दुश्शलां वीक्ष्य ममानुकंप्यां[1]
वध्योऽपि सौवीर मया विमुक्तः ।
मैवं पुनस्साहसकर्म कार्षी-
रित्युक्तमेनं विससर्ज भूपः ॥ 52

प्रणम्य दीनस्स तथेति यात-
स्त्रिस्रोतसस्तीरतपोवनस्थः ।
पार्थान् जिगीषुः प्रयतस्तपोभिः
प्रसादयामास पतिं पशूनाम् ॥ 53

निवारणं संयति दुर्जयानां
तेषां चतुर्णामपहाय पार्थम् ।
वरं ततो भक्तजनैकभव्या-
दासाद्य हृष्टः स्वपुरं प्रतस्थे ॥ 54

कर्णस्य कारुण्यनिधेः कदाचि-
दातस्थुषस्तल्पमलुब्धवृत्तेः ।
आत्तद्विजन्माकृतिरर्धरात्रौ
सान्निध्यमादत्त सहस्ररश्मिः ॥ 55

---

1. ममानुरूप्यां B.

तेजोनिमीलद्गृहदीपभासं
तं वीक्ष्य विस्मेरमनास्स वीरः ।
विहाय शय्यां विहितप्रणाम
स्सप्रश्रयं प्राञ्जलिराबभाषे ॥ 56

दृष्टोऽसि दत्तार्गल एव गेहे
देवेषु कस्त्वं द्विजवेषगूढः ।
कस्मिन्पुनः कर्मणि मां नियोक्तुं
प्रसादमेनं भगवन्विधत्से ॥ 57

निशम्य तद्वाचमशीतरश्मि-
रवोचदह्नामहमस्मि नाथः ।
पुत्रोऽसि कुन्त्या मदवाप्तजन्मा
पुष्णास्यतस्त्वं मयि भक्तिमग्र्याम् ॥ 58

वचो हितं मे शृणु पार्थगृह्यो
रूपं द्विजातेः परिगृह्य शक्रः ।
त्वामागतो दिव्यमिदं तनुत्रं
याचिष्यते कुण्डलयोर्युगं च ॥ 59

इमान्यदत्वा सहजानि वित्तै-
रन्यैरुपच्छन्दय तं विशिष्टैः ।
ददासि चेदर्थिजनैकबन्धो
संख्ये रिपूणां भवितासि वध्यः ॥ 60

श्रुत्वा वचस्तत्स जगाद भास्व-
न्वदेत्क इत्थं त्वदृते हितं मे ।
त्वमेव जानासि मम व्रतं त-
दत्याज्यमर्थिव्रजतोषणं यत् ॥ 61

द्विजन्मनां लब्धसमीहितानां
तुष्यामि पश्यन्वदनानि दाता ।
फुल्लानि बालातपलम्भनेन
भवानिव प्रत्यहमम्बुजानि ॥ 62

स्वान्याचमानाय जनाय कर्णः
प्राणानपि स्पर्शयतीति रूढा ।
सुपर्वभर्तुः[1] प्रणयस्य भङ्गा-
ज्जनश्रुतिः काचिदियं प्रणश्येत् ॥ 63

त्रिलोकनाथश्शतमन्युरर्थी
राधासुतोऽयं पुनरर्थनीयः ।
आत्मा न विश्राणयितुं न योग्यः
कियन्त्यहो वर्म च कुण्डले च ॥ 64

पृथासुतानां कुशलाय दिष्ट्या
याचेत चेदेष दिवोऽवतीर्णः ।
इमानि विश्राण्य विनश्वराणि
लप्स्ये स्थिरं कीर्तिमयं शरीरम् ॥ 65

त्वय्यस्ति भक्तिर्यदि मे प्रहृष्टः
स्नेहादिकस्ते मयि विद्यते चेत् ।
मनोरथं पूरयितुं मघोनः
प्रसीद याचे पुनरेतदेव ॥ 66

इत्युक्तवन्तं स्फुरदश्रुनेत्रः
पूषा पुनः पुत्रमिदं बभाषे ।

---

1. बलस्य हन्तुः B.

तवैष सर्गो यदि वत्स कुर्याः
क्षेमङ्करं कञ्चन मन्त्रिदेशम् ॥ 67

सकुण्डलं दित्सुरिदं तनुत्रं
शतक्रतोस्स्वीकुरु शक्तिमादौ
[1]-इयं च नोऽभीष्टफलं प्रदास्यन्
भक्तिं यथाऽराधयितुस्समग्राम् ॥ 68

तया सुरारातिनितम्बिनीनां
प्रत्यूषलक्ष्म्या सितचन्द्रिकायाः-[1] ।
विजिष्यसे विद्विषमित्युदीर्य
तिग्मद्युतिस्तत्र तिरोहितोऽभूत् ॥ 69

महायशास्सोऽपि निधाय चित्ते
स्वाप्नानुभूतामिव तां प्रवृत्तिम् ।
शक्रोपयानं प्रतिपाल्य तस्थौ
कृती जनः काङ्क्षति कीर्तिमेव ॥ 70

कदाचिदेनं द्विजमूर्तिरर्थी
वृषा बलिं विष्णुरिवाभ्यगच्छत् ।
नीचैर्हि वृत्तिं क्वचिदाश्रयन्ते
सतां हिते सज्जधियो महान्तः ॥ 71

कर्णस्तनुत्रं सह कुण्डलाभ्यां
कृताशिषा तेन स याचितोऽभूत् ।
ज्ञातो हरिस्तेन च तद्विनान्य-
न्निर्बध्यमानो न जिघृक्षुरासीत् ॥ 72

---

1–1. B omits.

ततो हसन् व्याहरदङ्गराजो
जाने भवन्तं भगवन्महेन्द्रम् ।
शक्तिं तवादाय विपक्षहन्त्री-
मिच्छामि सम्पादयितुं त्वदर्थम् ॥ 73

अथ प्रभावोपनतां स्वशक्तिं
प्रदर्शयन्त्सूतसुताय शक्रः ।
हत्वेयमेकं तव शत्रुमाजौ
मामेष्यतीति व्यतरत्प्रदीप्ताम् ॥ 74

दैत्यासृगारञ्जितचामराङ्का-
मादाय तामात्तकृपाणयष्टिः ।
अङ्गान्यमावर्च्छिन्नदात्मनैव
हर्षाम्बुभिन्नक्षतजांबुलेशः ॥ 75

उत्कृन्ततस्तत्कवचं तदानीं
न जातु जाता विकृतिश्शरीरे ।
न किञ्चिदप्यस्य निकुञ्चिता भ्रू
रपाटवं वा करयोर्न दृष्टम् ॥ 76

बिडौजसा विस्मितचेतसाऽयं
विलोकितो लोहितवर्षिगात्रः ।
रागेण दिग्धाकृतिमौषसेन
विडम्बयामास दिनाधिनाथम् ॥ 77

कृत्तं कृपाणेन सुजातवर्ण-
मुरच्छदं कुण्डलयोश्च युग्मम् ।
दत्त्वा महेन्द्राय भुवि स्थितोऽपि
स दिव्यवृक्षानधरीचकार ॥ 78

आश्चर्यमेघप्रसवाभिवृष्ट-
मापृच्छ्य राधेयमवाप्तकामः ।
नवं पुरस्कृत्य यशस्तदीयं
पतिस्सुराणां त्रिदिवं प्रतस्थे ॥ 79

उदन्तमाश्चर्यमथोपलभ्य
दिनेशपुत्रस्य दिगन्तमित्रम् ।
उवाह शोकं धृतराष्ट्रसूनु
स्सहानुजैः पाण्डुसुतश्च हर्षम् ॥ 80

स काम्यकाद्द्वैतवनं प्रयात
स्तपोवने तत्र वसन्नरेन्द्रः ।
कदाचिदागत्य ससंभ्रमेण
द्विजन्मना केनचिदाबभाषे ॥ 81

राजन्मृगः कोऽप्यरणिं मदीयां
हृत्वा विषाणेन तरौ विषक्ताम् ।
इतस्तरस्वी विपिनं विगाह्य
मूर्ता नभस्वानिव धावतीति ॥ 82

तस्याग्निहोत्रस्य विशङ्क्य विघ्नं
प्रत्याजिहीर्षन्नरणिं महीशः ।
पदानुसारेण जिघांसुरेणं[1]
सहानुजैर्धन्विभिरन्वधावत् ॥ 83

क्षणं धरित्र्यां क्षणमन्तरिक्षे
शृङ्गाग्रलग्नारणिरीक्ष्यमाणः ।

---

1. जवात्कुरङ्गं A.

तेषामिषूणामिव लोचनाना-
मलक्ष्यभावं हरिणः प्रपेदे ॥ 84

चिरं तमन्विष्य वने निषण्णा
रवौ ललाटंतपतां प्रयाते ।
किमप्युदन्यातुरतां गतास्ते
वन्या इवेभा वटमूलमापुः ॥ 85

आरुह्य सालं नकुलो ददर्श
सुस्निग्धमूलद्रुमम०जचारु ।
सरस्समीपस्थितमेघवृन्दं
पर्यस्तनक्षत्रमिवान्तरिक्षम् ॥ 86

ततोऽवतीर्णस्सहसा सहर्षं
भ्रातॄन्विलोक्य प्रथमानतर्षान् ।
सरोजिनीपत्रपुटैर्विशालैः
पानीयमानेतुमनाः प्रतस्थे ॥ 87

गत्वा सरः पद्मनिषण्णहंस-
मस्मिन्नपः पातुमथावतीर्णे ।
प्रश्नान्ममाख्याय पयः पिबेति
निगूढरूपा दिवि वागुदीर्णा ॥ 88

स तामनादृत्य पिपासयार्तो
निपीय पङ्करुहगन्धि पाथः ।
विक्षिप्तबाहाविटपं[1] क्षणेन
निर्मूलशाखीव पपात कूले ॥ 89

---

1. ०बाहाविटपः A; Cv.

चिरायितेऽस्मिन्ननुजस्तदीयः
राज्ञा नियुक्तस्सरसीं प्रयातः ।
दिव्यामवज्ञाय तथैव वाचं
भ्रातुर्दशां प्राप निपीततोयः ॥ 90

तयोर्विलम्बेन नृपानुशिष्टः
क्रमेण पार्थः पवनात्मजश्च ।
अनुष्ठितैवंविधकृत्यजाता-
मुभावयातामुभयोरवस्थाम् ॥ 91

चिरायमाणेषु तदानुजेषु
किमेतदित्याकुलचित्तवृत्तिः ।
शुचा तृषा च ग्लपितो नरेन्द्रः
पदैःस्खलद्भिस्सरसीमयासीत् ॥ 92

तत्रानुजान्वीक्ष्य मृतान्भयार्तः
पपात साक्रन्दमुपर्यमीषाम् ।
विगाह्य शोकं पुनरात्तसंज्ञ-
श्चकार चिन्तां प्रभुरश्रुवर्षी ॥ 93

अमी समीकेष्वविकारिशौर्या
निबर्हिताः केन विधेर्विपाकात् ।
चिह्नं सरस्येव पदं न दृष्टं
न किञ्चिदेषां वपुषि क्षतं च ॥ 94

इदं सरस्याद्द्विषदूषितं वा
मृताः किमेते परिपीय पाथः ।
न चैतदङ्गेषु विसृत्वरेण
विवर्णभावेन पदं वितेने ॥ 95

एभिर्विना जीवितनिर्विशेषै-
मर्मैकमत्यन्तविगाढदु:खम् ।
दूरं निरीक्ष्यैव पराभिभूता
प्राणान्परित्यक्ष्यति याज्ञसेनी ॥ 96

हतानमूनत्र यदि त्यजेयं
ममात्महत्या श्रुतिगर्हिता स्यात् ।
कथं सहे दु:खमिति प्रबाष्पः
पपात शोकोपहतो धरित्र्याम् ॥ 97

नतस्सतर्षस्य विधाय शान्तिं
जिज्ञासुरेषामवसानहेतुम् ।
सरोऽवतीर्णः पुरत:स्थितेन
केनापि यक्षाकृतिना बभाषे ॥ 98

इदं सरः पार्थ परिग्रहो मे
प्रश्नाननादृत्य तवानुजाताः ।
पीताम्भसो हन्त हता मयैव
त्वमप्यमीषां न गतिं प्रयायाः ॥ 99

निपीय तां श्रोत्रपुटेन वाच-
मुन्मृज्य वारीणि कराहृतानि ।
प्रश्नाननेनाभिहितान्क्रमेण
प्रत्युत्तरैः प्राह नृपः स्फुटार्थैः ॥ 100

प्रीतोऽस्मि ते प्राज्ञतमाय राज-
न्यमिच्छसि भ्रातृषु तं ददामि ।
उक्तस्स्वनेनैवमुपोढहर्षो
जीवन्तमैच्छन्नकुलं नरेन्द्रः ॥ 101

स तं जगादार्य न वेत्सि कार्यं
द्विषद्धृतश्रीहरणे प्रवीणौ ।
भीमार्जुनौ ते सहजौ विहाय
कथं सपत्नीसुतमिच्छसीति ॥ 102

कुन्त्यां यथा भद्र ममास्ति भक्ति-
स्तथैव माद्र्यामपि निर्विशेषा ।
जीवामि मे मातुरहं तु तस्या
जीवत्वसावित्यवदत्स यक्षम् ॥ 103

धर्मोऽहमस्मि तव वेदितुमानृशंस्यं
यातो मृगत्वमरणिं हृतवान्द्विजातेः ।
सर्वेऽप्यमी त्वदनुजा मदनुग्रहेण
जीवन्त्वमुं प्रमदवानवदत्स दिव्यः ॥ 104

तीरात्तेषु समुत्थितेषु सहसा सुप्तप्रबुद्धेष्विव
प्रीतं विस्मयिनं च पुत्रमवदद्भूयोऽपि धर्मस्तदा ।
इष्टं रूपमयत्नमेव दधतो भूम्ना प्रसादस्य मे
भूमौ कश्चिदपि त्रयोदशमिदं वर्षं न जानातु वः ॥ 105

इत्युक्तवत्यरणिमाशु वितीर्य तस्मि-
न्नन्तर्हिते सवितरीव दिनावसाने ।
वैतानहव्यवहधूममिलत्तमिस्रं
पार्थास्तपोवनमवापुरवाप्तहर्षाः ॥ 106

**इत्यगस्त्यपण्डितकृतौ[1] बालभारते महाकाव्ये**
**॥ नवमस्सर्गः ॥**

---

1. A omits ०पण्डित

# दशमस्सर्गः

पार्था मात्स्यपुरे गूढमन्त्यमब्दं निनीषवः ।
प्रस्थाप्य द्वारकां सर्वाननुगांस्तद्वनं जहुः ॥ 1

उपप्लाव्यमुपागम्य पितृकाननशाखिनि ।
निधाय शस्त्रसंभारं वेषान्तरभृतोऽविशन् ॥ 2

यति पौरोगव क्लीब सादि गोपालकाकृतीन् ।
कृष्णां च पौरा नाजानन् सैरन्ध्रीरूपधारिणीम् ॥ 3

अथ धर्मात्मजो मात्स्यमासदत्सदसि स्थितम् ।
नृपैर्युतं[1] प्रश्रयाद्यैश्शमो धर्मं गुणैरिव ॥ 4

संवीतनवकाषायो धृतदण्डकमण्डलुः ।
सन्ध्यांशुभिन्नो विद्युत्त्वानभ्यर्णेन्दुरिवाम्बुदः ॥ 5

तं वीक्ष्य तेजसां राशिं विराटस्सह राजभिः ।
उदस्थादासनात्तूर्णं गुरुं शक्र इवामरैः ॥ 6

स्वेनैव वत्सरस्यान्ते साफल्यं यास्यतीं यतिः ।
प्रायुङ्क्त प्रणतायाऽस्मै जनेशाय जयाशिषम् ॥ 7

भगवन्प्राकृतस्त्योऽसि किमर्थं त्वमिहागतः[2] ।
अनुयुक्तो नृपेणैवमाचचक्षे युधिष्ठिरः ॥ 8

---

1. ०र्वृतं A. 2. मामिहागमः A.

कङ्को नाम जगत्यस्मिन्विदितो धर्मभूरहम् ।
न्यवसं वासवप्रस्थे पार्थचारित्रतोषितः ॥ 9

द्यूते परहृतस्वेन व्रतिना वनमेयुषा ।
दिक्षु सेविततीर्थेन प्राप्तं पुरमिदं मया ॥ 10

वर्षमेकं तवाभ्याशे वत्स्यामि श्रेयसे यतः ।
आसादितोदयश्लाघ्यः साधयामि ततः परम् ॥ 11

उक्तवन्तमिति प्रीतो मात्स्यस्सौहार्दनिम्नधीः[1] ।
भिक्षुमर्धासने चक्रे कुबेर इव धूर्जटिम् ॥ 12

आजगाम तदास्थानं वसानो मलिनांशुकम् ।
भिन्दन्निव पदैरुर्वीं दर्वीपाणिर्वृकोदरः ॥ 13

उपसृत्य नृपं भीमो दृष्टः कौतुकिभिर्जनैः ।
गम्भीरेण स्वरेणाह सर्वां मुखरयन् सभाम् ॥ 14

वल्लो नाम पार्थस्य गेहे रसवर्तापतिः ।
आगतोऽस्मि समं तेन दीव्यन्तं त्वां मिषेविषुः ॥ 15

श्लाघयिष्यसि मत्सेवां सेवमानो नवान् रसान् ।
इत्युक्तः प्रीतिमान्भीमं सूदाध्यक्षं चकार सः ॥ 16

रुषो विवर्तमूर्वश्याः क्लीबत्वं बिभ्रदर्जुनः ।
आययौ कञ्चुकच्छन्नज्याघातौ धारयन्भुजौ ॥ 17

आगुल्फलम्बिकौशेयं निक्कणन्नूपुरद्वयम् ।
स्त्रीवेषं कुण्डलप्रेक्ष्यं वेणीबन्धोज्ज्वलं वहन् ॥ 18

---

1. ०नीरधिः A.

कोऽयं शम्भुरिवानर्हं महौजा वेषमास्थितः ।
चिन्तयन्तमिति क्ष्मापमुपसृत्य जगाद सः ॥ 19

अहं बृहन्नला नाम नर्तकी त्वामुपस्थिता ।
मया हि सख्या कृष्णायाश्शक्रप्रस्थे पुरा स्थितम् ॥ 20

साहमन्तःपुरे राजन्नाज्ञया तव कन्यकाः ।
शिक्षयिष्यामि गान्धर्वं यदि ते मयि कौतुकम् ॥ 21

तथेत्युत्तरमाख्याय नृपः प्रीतो गुणोत्तराम् ।
तस्योत्तरकुरून् जेतुः शिष्यामादिशदुत्तराम् ॥ 22

प्रविश्य नकुलस्तावदुपधृत्य कशां शुभाम् ।
जगाद जगतीपालं सौन्दर्यहृतचेतसम् ॥ 23

दामग्रन्थिरिति ख्यातः पुरा कौन्तेयमानितः ।
आगतोऽस्मि तवाभ्याशं सेवार्थी वाजिशिक्षकः ॥ 24

रक्षार्थमस्मिन्नश्वानां स्थापिते मत्स्यभूभुजा ।
ददृशे सहदेवोऽपि गोपवेषो यथाऽच्युतः ॥ 25

प्रणम्य जातिनैच्येन व्याजहार वचो नृपम् ।
अहं तु तन्त्रपालाख्यः पार्थगोधनरक्षकः ॥ 26

अद्यारभ्य निदेशात्ते धेनवो मयि गोप्तरि ।
निरामयाश्च पुष्टाश्च भविष्यन्ति च सुव्रताः ॥ 27

इत्युक्तवन्तं वसुभिस्संभाव्य नकुलानुजम् ।
चक्रे गोपपतिं मात्स्यः प्रतीक्ष्यो हि गुणी सताम् ॥ 28

दुश्शासनबलाकृष्टां बिभ्रती वेणिमाकुलाम् ।
सुधेष्णामासदत्कृष्णा गङ्गामिव कलिन्दजा ॥ 29

तां दृष्ट्वा विस्मिता राज्ञी रूपस्येवाधिदेवताम् ।
इमां यदि नृपः पश्येत्त्यजेन्मामित्यचिन्तयत् ॥ 30

तां कृष्णा व्याहरद्राज्ञीं सैरन्ध्री मालिनीत्यहम् ।
पत्रकादिकलाभिस्त्वामाराधयितुमागता ॥ 31

पतयस्सन्ति मे पञ्च गन्धर्वा गूढचारिणः ।
तद्गुप्तां मां स्पृशेत्को वा पञ्चास्यामिव पन्नगीम् ॥ 32

ततः प्रमुदिता देवी शङ्कां निर्वास्य चेतसः ।
स्वगृहे वासयामास तामुक्तप्रबलाश्रयाम् ॥ 33

मात्स्यमक्षविनोदेन धर्मसूनुरतोषयत् ।
इतरेऽपि प्रतिदिनं स्वाधिकारैर्गुणोत्तरैः ॥ 34

कदाचित्कीचकः कृष्णां सुधेष्णासद्मनि स्थिताम् ।
दृष्ट्वा ययौ स्मरेषूणां कृतान्तस्य च लक्ष्यताम् ॥ 35

कन्दर्पोरगदष्टेन खिद्यता रोमभेदिना ।
कम्पभाजा स्खलद्वाचा सा बभाषे हतात्मना ॥ 36

अयि का त्वं चरस्यत्र मूर्तेव गृहदेवता ।
नैव मे दृष्टपूर्वासि श्रीरिवापुण्यभागिनः ॥ 37

किं न संभावयस्यङ्गैर्भूषणार्हैर्विभूषणम् ।
अथवा सगुणा सूक्तिर्नालङ्कारमपेक्षते ॥ 38

भजस्व कृतिनं कश्चिन्नवयौवनभूषिता ।
वीरुधोऽपि न शोभन्ते विना वृक्षावलम्बनम् ॥ 39

घनोदयं समासाद्य श्लाघ्या मधुरया गिरा ।
सौधेषु विहर स्वैरं क्रीडाद्रिष्विव बर्हिणी ॥ 40

श्रुत्वा तद्वचनं तस्य सान्तःक्रोधा नृपात्मजा ।
दुरासदं परैराख्यत्तं गन्धर्वपरिग्रहम् ॥ 41

तया लुब्धगिरेवार्थी स भग्नप्रणयस्तदा ।
व्रीडितो दुःखितश्चान्ते प्रपेदे केकयात्मजाम् ॥ 42

हेतुभिर्वारितेनापि सा तेनाभ्यर्थिता मुहुः ।
सैरन्ध्रीसंगमे दूत्यं प्रत्यपद्यत दुःखिता ॥ 43

तया निर्भर्त्स्य मध्वर्थं प्रहिता दौत्यशंसिनी ।
प्रेष्यत्वं गर्हयन्ती सा कीचकस्य गृहं ययौ ॥ 44

करपल्लवलग्नेन हेमपात्रेण सा बभौ ।
स्फुरता स्वर्णपद्मेन स्वर्णदीनलिनी यथा ॥ 45

ससर्पमिव वल्मीकं सव्याघ्रमिव कन्दरम् ।
आससाद शनैस्त्रस्ता सदनं सूतजन्मनः ॥ 46

विधिनेव समुक्षिप्तस्स तल्पात्तूर्णमुत्थितः ।
प्रत्युज्जगाम पाञ्चालीं पदैर्हर्षविसृत्वरैः ॥ 47

अब्रवीच्च जगत्यस्मिन् सुकृती नास्ति मत्समः ।
सम्भावयसि यत्पद्भ्यां गृहं मे श्रीरिवाम्बुजम् ॥ 48

आरोह तल्पमास्तीर्णं वरारोहे करद्वयम् ।
मदर्थं क्लेशितौ पादौ संवाहयितुमीहते ॥ 49

सा तं प्रत्याह मध्वर्थं प्रेषिताऽस्मि सुधेष्णया ।
तदुपाहर यास्यामि नैवं मां वक्तुमर्हसि ॥ 50

कीचकस्त्ववदत्किं ते मदिरार्थमिहागमः ।
अधरामृतमत्यर्थं मां पाययितुमागता ॥ 51

ततोऽवलम्बितं तेन हस्तमाधूय सत्वरम् ।
सभां मात्स्यस्य सन्त्रस्ता दुद्राव द्रुपदात्मजा ॥ 52

अनुसृत्य स तां भीरुं हस्तेनाकृष्य पातिताम् ।
प्रजहाराङ्घ्रिणा क्रुद्धो लतां मत्त इव द्विपः ॥ 53

सा पांसुधूसरकचा वमन्ती रुधिरं बहु ।
ददृशे मेघराजीव कीचकोत्पातशंसिनी ॥ 54

भीमस्तु तत्र निर्वर्ण्य प्रियायाः केशकर्षणम् ।
कीचकारण्यदावेन क्रोधेन परिषस्वजे । 55

पश्यन्तमङ्गणे वृक्षमात्मानं च युधिष्ठिरः ।
वारयामास तं क्रुद्धं वचसा वक्रिमस्पृशा ॥ 56

अकाले सूद किमिदमेधसे तरुरुच्छ्रितः ।
न भज्यतामयं सर्वे छायामस्य वयं श्रिताः ॥ 57

दारुणाकृतिना सिद्धिः क्वाऽपि निर्वर्त्यतां त्वया ।
कर्म सर्वाविरोधेन कुर्वन्कुशलमश्नुते ॥ 58

तेन स्तम्भितसंरम्भे हिडिम्बद्विषि पार्षदी ।
द्विगुणां पूर्वमापेदे शुचं पश्चात्सभान्तरम् ॥ 59

रुदती तत्र मात्स्येन्द्रं पतीन् गन्धर्वसंज्ञितान् ।
अगर्हयत्कृतोपेक्षानपचारिणि कीचके ॥ 60

गच्छ भीरु शुचं कालाच्छमयिष्यन्ति ते प्रियाः ।
इत्थमाश्वासिता भर्त्रा यतिना भवनं ययौ ॥ 61

कीचकेन पदाक्रान्तां क्लिष्टां वेणीं च बिभ्रती ।
वैरनिर्यातने यत्नं चक्रे कृष्णोरगी यथा ॥ 62

तमसा हृदि तस्येव जगति स्थगिते निशि ।
वासवेरग्रजस्याप वासवेश्म महानसम् ॥ 63

यः प्राङ् मृगमदालेपः शिश्ये सद्मनि भूषिते[1] ।
सधूमे तत्र संसुप्तं मषीमलिनमैक्षत ॥ 64

प्रियं चन्दननिष्पेषकिणचिह्नेन पाणिना ।
बोधयन्त्याह किं निद्रां यासि दीर्घां न ते रिपुः ॥ 65

स तु प्रबुध्य प्रेयस्यां तल्पस्थायां न्यवेशयत् ।
रुषा स्तम्भितयेवान्तर्निद्रया कलुषे दृशौ ॥ 66

दीनामालिङ्ग्य तां प्राह प्राप्तासि किमिहाधुना ।
किमर्थमश्रुणा क्लिष्टं हिमेनाब्जमिवाननम् ॥ 67

तच्छ्रुत्वा वचनं कृष्णा लज्जामन्युभयाकुला[2] ।
तं प्रत्युवाच किं यूयं दुःखं जानीथ मामकम् ॥ 68

दिष्ट्या वेषान्तरं प्राप्य सुखिनां परसेवया ।
किं विक्रमेण किं कीर्त्या किं दारैः किं ह्रिया च वः ॥ 69

---

1. धूपिते A. 2. ०मन्युभराकुला A.

कौरवादप्युपेक्ष्योऽभूद्भवतामद्य कीचकः ।
यत्कचेषु विकृष्टाहं प्रहताऽस्मि पदामुना ॥ 70

नृपो निरूष्मो निर्वीर्यो मन्ये क्लीबतयार्जुनम् ।
मुग्धौ यमौ सदा मान्यौ न जानेऽद्य कथं भवान् ॥ 71

वने यद्यदभूत्कृच्छ्रं तत्तन्मे शमितं त्वया ।
इयं च ध्रियते वेणी हनिष्यसि रिपूनिति ॥ 72

क्षुद्रोऽयं ते न वध्यश्चेद्भूयः प्राप्तपराभवा ।
हतानिमानसून् वोढुं न शक्ष्याम्यप्रतिक्रियान् ॥ 73

इत्याख्याय पुनस्तस्या रुदत्या बाष्पवृष्टिभिः ।
ववृधे हृदि भीमस्य क्रोधात्मा वैद्युतोऽनलः ॥ 74

स तां स्मेरमुखोऽवादीदयं मुग्धे जरासुरात् ।
अधिकः किं त्वदामर्शी विघ्नोऽभून्मत्क्रुधो नृपः ॥ 75

तथापि पुनरार्तां त्वां नोपेक्षितुमहं क्षमः ।
श्वः प्रातरनुकूलेव वक्ष्यस्येवं तमागतम् ॥ 76

नृत्तवेश्म तमोगर्भमेको निशि समेष्यसि ।
अहमप्यागमिष्यामि गन्धर्वैरप्यलक्षिता ॥ 77

त्वयेति दत्तसंकेतमागतं तत्र हन्म्यहम्[1] ।
इत्याश्वास्य प्रमृष्टाश्रुमालिङ्ग्य विससर्ज ताम् ॥ 78

अन्येद्युस्सूतपुत्राय ससान्त्वमुपतस्थुषे ।
भीमोपदिष्टमाचष्ट सङ्केतं मुदितेव सा ॥ 79

---

1. तं निहन्म्यहम् A.

तन्निशम्य स चात्मानममंस्तातिशचीपतिम् ।
स्वदते प्रणयालापः सङ्गमादिव योषिताम् ॥ 80

भवनं प्रति यातस्य स्वं प्रसादयतो मुहुः ।
आयुषा सूतपुत्रस्य सह क्षयमगादहः ॥ 81

अग्रे कृतेन यामिन्या जगाहे तमसा जगत् ।
चोदितेन च पार्षत्या नृत्तागारं वृकारिणा ॥ 82

तस्मिन्किरीटिनस्तल्पे शयानो निभृताकृतिः ।
मृगं कुञ्ज इव व्याघ्रः स शत्रुं प्रत्यपालयत् ॥ 83

स मुदा कामुकस्तावदेकाकी तद्गृहं गतः ।
तमोवृतमुपासर्पत्सैरन्ध्रीति वृकोदरम् ॥ 84

प्रीतस्स धृतिमान्नाम तस्य पार्श्वस्थितोऽब्रवीत् ।
अयि मानिनि धन्योऽस्मि यन्मां दासं प्रतीक्षसे ॥ 85

उत्थाय कृतिना लभ्यैरेभिः फुल्लकभूषणैः ।
अङ्गैरनङ्गतापार्तं मामालिङ्गितुमर्हसि ॥ 86

तूष्णीं भवसि सुभ्रु त्वं क्रुद्धा किं मे विलम्बनात् ।
अथवा हतपादस्य प्रहारः स्मृतिगोचरः ॥ 87

यद्येवं ताडय स्वैरं मां यावत्कोपविप्लवः ।
नूंपुरोद्वहनक्लेशरहितेनाङ्घ्रिणाऽमुना ॥ 88

स्तम्भान्तरितया पत्न्या साकमाकर्ण्य तद्वचः ।
स्त्रीवन्मञ्जुलमाचष्ट वचनं पवनात्मजः ॥ 89

अस्मिन्प्रहर्षावसरे कुतोऽमर्षस्य सम्भवः ।
न त्वं जानासि शीलं मे गन्धर्वैर्बिदितं पुरा ॥ 90

मां तु या काचन स्त्रीति न मन्येथाः स्मरातुरः ।
रंभास्पर्शसुखं यायान्मदीयोरुनिपीडनात् ॥ 91

इत्युक्तः किञ्चिदानम्य परिरम्भणसत्वरः[1] ।
शयानेनैव भीमेन केशेषु जगृहे रिपुः ॥ 92

अयोषिदुचितं मत्वा कचग्रहमुरुव्यथम् ।
मुष्टिसन्ताडिताद्धीमान्मोचयामास कुन्तलान् ॥ 93

परबोधभयत्यक्तसंरंभवचनावुभौ ।
नियुद्धमुद्धतामर्षौ कुर्वाते भीमकीचकौ ॥ 94

निहतं क्षुण्णसर्वाङ्गं वायुरुग्णमिव द्रुमम् ।
दर्शयित्वा रिपुं पत्न्यै ययौ भीमः स्वमन्दिरम् ॥ 95

तस्या भियेव क्रोशन्त्याः श्रुत्वा सूतसुतं हतम् ।
आजग्मुरनुजास्तस्य रङ्गपालैर्निवेदिताः ॥ 96

ते दृष्ट्वा ज्यायसोऽवस्थां श्रुत्वा हेतुं च दुःखिताः ।
शिबिकायां तमारोप्य संस्कर्तुं निरयासिषुः ॥ 97

आर्येण प्रार्थिता सेयं दिवि वा भुज्यतामिति ।
कृष्णां सह शवेनैव दग्धुं निन्युस्सुसंयताम् ॥ 98

तच्चिकीर्षितमाख्याय क्रन्दन्तीं मारुतिः प्रियाम् ।
वारिगतां वशां हस्ती विक्रोशन्तीमिवारुणत्[2] ॥ 99

---

1. ॰तत्परः A.   2. वाऽरुणोत् A.

निर्गत्य सत्वरं क्रुद्धो गन्धर्वव्यपदेशवान् ।
ययौ पितृवनोद्देशं जिघांसुरुपकीचकान् ॥ 100

नदन्भयेन पार्षत्याः समभुद्धृत्य पादपम् ।
भूतानां तैर्हतैः प्रीतिं चक्रे पितृवनौकसाम् ॥ 101

विद्रुतेषु प्रतिदिशं नृषु गन्धर्वशङ्किषु ।
बन्धमुक्तां प्रियां भीमो मुक्तानन्दाश्रुमब्रवीत् ॥ 102

सूतपुत्रान्हतवता शतं त्वदपकारिणः ।
निधने धार्तराष्ट्राणां योग्येव विहिता मया ॥ 103

गच्छ गेहमितो भीरु त्वां गन्धर्वभयाद्ध्रुवम् ।
नाशयित्रीमपि भ्रातन्नत्यजेन्मात्स्यगेहिनी ॥ 104

इत्थमुक्त्वा गते तस्मिन्विकस्वरमुखाम्बुजा ।
दिनलक्ष्मीर्द्वितीयेव प्रत्यावर्तत पार्षती ॥ 105

अथ शुश्राव कौरव्यः पाण्डवान्वेषिणश्चरात् ।
स्त्रीहेतोर्निशि गन्धर्वैः पञ्चभिः कीचकं हतम् ॥ 106

तां स्त्रियं पार्षतीं गूढां निश्चिकाय महीपतिः ।
तेषामन्यतमं भीमं बलिनस्तस्य भञ्जकम् ॥ 107

हते तु गोधने योद्धुं पुरान्मात्स्यस्य निर्गतान् ।
अपूर्णसंविदः शत्रून्भूयः कुर्यामरण्यगान् ॥ 108

इति संमन्त्र्य सामात्यस्त्रिगर्तपतिना कचित् ।
अहारयद्गोधनानि हरिष्यंस्त्वयमन्यतः ॥ 109

विराटस्तु हृतास्तेन श्रुत्वा गा निरगात्पुरः ।
गजताश्वीयपादातैः[1] कल्पितैरन्वितो रथी ॥ 110

निस्तीर्णसमयः पार्थश्चिकीर्षुस्सुहृदः प्रियम् ।
तस्मै शशंस स्वं भीमं यमौ च रणकोविदान् ॥ 111

प्रीतेनानुमतस्तेन सन्नद्धो रथिभिस्स तैः ।
मन्त्रोत्साहप्रभावैर्वा मूर्तैरनुगतो ययौ ॥ 112

मात्स्यः पथि सुशर्माणं रुरोध हृतगोधनम् ।
आकृष्टशरदभ्रौघं शैलसानुरिवानलम् ॥ 113

ततो मात्स्यः त्रिगर्तानां प्रावर्तत रणोत्सवः ।
शरकृत्तशिरःपातरवरुद्धानकध्वनिः ॥ 114

बलानां गैरिकाभेन रजसेव विसर्पता ।
आलोहितातपो भानुरपराब्धिमगाहत ॥ 115

कालस्य कायकान्त्येव संग्रामभुवमेयुषः ।
छायया शस्त्रधाराणां द्विगुणं ववृधे तमः ॥ 116

चत्वारश्शरनिकरैः कुरुप्रवीरा
स्त्रैगर्तीं किमपि वरूथिनीममृन्दन् ।
दिक्पालद्विपपतयो रदप्रकाण्डैः
गङ्गाया इव सरितस्तटीमुदग्राम् ॥ 117

प्रसभं हृतं प्रकटयन्कृतज्ञता-
मनुजेन मात्स्यमहितादमोचयत् ।

---

1. सरथाश्वीय० A.

अमुना गृहीतमथ तेन वा रथात्
सुहृदस्ततः प्रिययशाः पृथासुतः ॥ 118

हित्वा सुशर्मणि यशस्सह गोधनेन
ह्रीते गते निहतशेषबलानुगोऽयात् ।
चन्द्रातपक्षपितसैन्यसमीकखेदां
तां यामिनीमवसदध्वनि मात्स्यराजः ॥ 119

इत्यगस्त्यपण्डितकृतौ[1] बालभारते महाकाव्ये दशमस्सर्गः ।

1. A omits ०पण्डित

# अथैकादशस्सर्गः

अपरेद्युरुपेत्य वल्लवो वरयोषिज्जनमध्यवर्तिने ।
निजगाद विराटसूनवे कुरुराजेन हृतं गवां कुलम् ॥ 1

स तु सत्वरमाह सारथिं यदि लभ्येत मृधे विरोधिनः ।
विमथिष्यति मे भुजः कृती विजयः प्रागिव खाण्डवौकसः ॥ 2

सुतया द्रुपदस्य चोदिता सदसि भ्रातरमुत्तराऽवदत् ।
मम शंसति मालिनी सखी रथचर्यानिपुणां बृहन्नलाम् ॥ 3

स निशम्य वचस्तदद्भुतं सुतमानाय्य तया मरुत्वतः ।
अयि कौरवरोधकांक्षिणः कुरु मे सारथिकृत्यमित्यशात् ॥ 4

प्रकटस्तव संगरक्षितौ विजयः स्यादिति सस्मितं ब्रुवन् ।
अनभिज्ञ इवाग्रहीदबात्कवचं शक्रसुतस्तदर्पितम् ॥ 5

जहसुर्वलदङ्गयष्टय स्तमुदीक्ष्याकुलकुण्डला स्त्रियः ।
वदनैर्नवनीलमुद्रिका भ्रमरीचारुकराम्बुजावृतैः ॥ 6

अथ[1] चोदितधुर्यमास्थितो रथमामोचितवर्मणाऽमुना ।
नगरान्निरगच्छदुत्तरः प्रतिगृह्णंत्सुदृशां जयाशिषः ॥ 7

रथवेगजितो भयादिव प्रतिकूलत्वमपास्य मारुतः ।
हरिसूनुमसेवताहृतस्मितलीलानवपुष्पसौरभः ॥ 8

---

1. इति B.

कुरुमात्स्यकुमारयोस्तयोरहितानीकमदृश्यताग्रतः[1] ।
रजसा परिपाण्डुनावृतं हिमसच्छादितकाननोपमम् ॥ 9

तदुदीक्ष्य पयोधिसन्निभं सितवाहेन तितीर्षुणा दृशौ ।
बहुशः किल दृष्टसारयो र्निदधाते भुजयानपात्रयोः ॥ 10

तदिदुज्ज्वलहेतिमुत्तरः कुरुराजध्वजिनीं विलोकयन् ।
प्रिययेव भियासकम्पया परिरेभे धृतधर्मपाथसा ॥ 11

धृतिमस्य मनस्तदा जहौ धनुरालम्बितवेपथुः करः ।
रसनासरसत्वमाकुलस्स्वरथं सोऽपि पलायनोद्यतः ॥ 12

रभसेन विभूषणैश्च्युतैर्गुणजालैरिव भीरुरुझितः ।
प्रपलायत दूरमुद्वहन् श्वसितं भूरि भिया श्रमेण च ॥ 13

अमुमाशु विलोकितः परैरनुदुद्राव जिघृक्षुरर्जुनः ।
जयकुञ्जरचारुचङ्क्रमो जवशिञ्जानमनोज्ञभूषणः ॥ 14

तमशङ्कत कौरवीचमू रपि गुप्तं गमनेन फल्गुनम् ।
प्रथितं भुवि वस्तुगूढमप्यधिगम्येत गुणेन केनचित् ॥ 15

स धृतस्तमुवाच विस्फुरन् बहु[2] दास्यामि धनं विमुञ्च माम् ।
कुरवो निखिला हरन्तु गाः प्रबलैर्योद्धुमहं न तैरलम् ॥ 16

इह मृत्युमुखाच्च्युतस्य मे यतते मातरमीक्षितुं मनः ।
नियतं रणभीरुरक्षितस्सुकृतं भूरिजनस्य जायते ॥ 17

इति वाचिनमेनमब्रवीत्प्रहसन्सानुनयं धनञ्जयः ।
अयि वीर कृतं भयेन ते विनिवृत्यारिषु तन्निधीयताम् ॥ 18

---

1. ०अपश्यत० A.    2. अयि A.

कृततादृशवीरभाषितं सदसि त्वामधुना पलायितम् ।
प्रहसिष्यति कामिनीजनो निधनं ते रिपुभिर्वरं ततः ॥ 19

अलमसि न तां निरीक्षितुं कुरुवीरप्रवरांशुकार्थिनीम् ।
भज सारथितां करोम्यरीन् सह गोभिस्तृणचर्वणैषिणः ॥ 20

अनुनीतमभीक्ष्णमेष तं रथमारोप्य विधाय सारथिम् ।
प्रययौ पितृकाननद्रुमं स्थितिमातन्वत यत्र हेतयः ॥ 21

स शमीमधिरोपितोऽमुना चकितश्शस्त्रभरान्महौजसः ।
परिगृह्य धनुर्महेषुधी मकुटं शङ्खमतोऽवतीर्णवान् ॥ 22

दधती विबुधायुधोपमा मयि केषामियमस्त्रसंहतिः ।
इति पृच्छति मात्स्यनन्दने कथयामास यथार्थमर्जुनः ॥ 23

इदमायुधजातमात्मनां विटपिन्यत्र निधाय पाण्डवाः ।
निभृताः पितुरन्तिके तव द्विषदज्ञातनिवासमासते ॥ 24

मम विद्धि किरीटिनोऽग्रजौ यतिसूदौ हयधेनुपालकौ ।
अनुजौ द्रुपदात्मजां सखे तव मातुर्नवशिल्पकारिकाम्[1] ॥ 25

किणलक्ष्म परीक्ष्य हस्तयो र्मुदितः पार्थमवोचदुत्तरः ।
अपि शक्रशतान्न मे भयं यदसि त्वं शरणं महाभुजः ॥ 26

विजयस्तु विसृज्य षण्डतां धनुरादत्त किरीटमण्डनः ।
मकुटाहतिलग्नमीशितु र्दधदिन्दोरिव धाम चामरम् ॥ 27

समदृश्यत सज्जतां गतो गुरुविस्फारयुतश्च कार्मुकः ।
अमुमाहवबन्धुमागतं प्रणतः स्वागतमाचरन्निव ॥ 28

---

1. ०कारिणीम् A.

परिफुल्लकपोलमण्डलं मुखमुत्पक्ष्मविलोचनं वहन् ।
अलिकेन सितच्छदायितं जलजं पूरयति स्म फल्गुनः ॥ 29

क्षुभिताऽजनि कौरवीचमूर्ध्वनिना तस्य गभीरतास्पृशा ।
प्रलयोदधिसत्वसंहतिर्गलघोषेण यथादिपोत्रिणः ॥ 30

वदति स्म गुरुर्निशम्य तौ निनदौ गाण्डिवदेवदत्तयोः ।
ध्रुवमर्जुन एव दृश्यते कुरवस्सन्तु धृतायुधाः पुरः ॥ 31

परिवर्तकृतान्तभीषणं हरशक्राधिगतास्त्रसम्पदम् ।
इह योत्स्यति यः किरीटिनं सुभटोऽस्मासु स एव सम्मतः ॥ 32

कुपितोऽङ्गपतिर्जगाद तं किमयं शत्रुरतिप्रशस्यते ।
अमुनैव हि योद्धुमागता वयमेते न तु मात्स्यभूभुजा ॥ 33

इषुरेष शिरः किरीटिनो मिषतां वस्सहसा हरिष्यति ।
अयमेव महीमशात्रवीं भुजभूम्ना भजतां कुरूद्वहः ॥ 34

कुपितस्तमुवाच गौतमः किमिदं कर्ण वृथा विकत्थसे ।
तव तस्य च वेत्ति विक्रमं ननु गन्धर्वरणे सुयोधनः ॥ 35

कुरुभूभृदुवाच वीक्षितो विजयोऽस्माभिरपूर्णवत्सरः ।
पुनरेष वनं प्रतिष्ठितां कृतकृत्योऽस्मि कृतं रणेन वः ॥ 36

वदति स्म ततो[1] सरित्सुतो नृप तेषां खलु शास्त्रनिश्चयात् ।
कृतिनां समयोऽधिको यथावुदयेदेष किमन्यथा सुधीः ॥ 37

वितरिष्यसि पाण्डुसूनवे चरितार्थाय यथांशमुर्वराम् ।
स यशोनिधिरन्यथापि तां न विमुञ्चेदधिविक्रमानुजः ॥ 38

1. सतां A.

प्रहसन्नवदत्सुयोधनः परिपूर्णस्समयोऽस्तु वा न वा ।
भुवि गोष्पद्मात्रमप्यहं वितरिष्यामि न धर्मसूनवे ॥ 39

अथ पार्थरथः पुरोदधच्चटुलां केतनयष्टितर्जनीम् ।
द्रुतमभ्यपतद्विषच्चमूं निजनेमिध्वनिनेव भर्त्सयन् ॥ 40

विजयः प्रसृतेन शङ्खतो निनदेन क्षुभिता निवर्त्य गाः ।
गुरुभीष्मपुरस्सरान्कुरून्प्रतिजग्राह पृषत्कवृष्टिभिः ॥ 41

सभयं सुरसिद्धचारणैर्दिवि दृष्टाः प्रविसारि तेजसः ।
रथिषु न्यपतन्महेषवः प्रलयोल्का इव शैलमूर्धसु ॥ 42

प्रसृता रणरेणुरातपं दिवि तां बाणगणो धनुष्मताम् ।
अरुधत्प्रतिलोमपातिनं तमसा शक्रसुतेषु संहतिः ॥ 43

स्खलदद्रिनिभेषु हस्तिषु प्रसरद्वीरभुजोर्मिसङ्कुलम् ।
कटपूतनमज्जनोचितं प्रससार क्षतजापगाशतम् ॥ 44

वरणे विबुधत्वमेयुषां सुभटानामपि विस्मृतादरम् ।
अतिराघवशौर्यमाहवे सुरगाणिक्यमपश्यदर्जुनम् ॥ 45

प्रहतोऽस्य शरैः पलायितो रविसूनुर्हतसारथिः कृपः ।
दलितध्वजकार्मुको गुरुस्ससुतश्शान्तनवश्च मूर्च्छितः ॥ 46

चिरनिर्मितजन्यविह्वलं विकलच्छत्रमुदीक्ष्य कौरवम् ।
अभियात्सु पुनर्विरोधिषु व्यमुचत्स्वापनमस्त्रमर्जुनः ॥ 47

क्षतिनिद्रितपत्तिभिस्तदा तुरगस्कन्धशयानसादिभिः ।
गजसुप्तनिषादिभिर्बलैरजनि स्यन्दनसंविशन्नृपैः ॥ 48

नृपदृक्कमलैर्निमीलितैः क्षितिरेणुच्छुरिताग्रपक्ष्मभिः ।
समभाव्यत पाकशासनेः शशिनः कीर्तिमयस्य जृम्भणम् ॥ 49

श्लथमुष्टिपरिच्युतायुधानवशान्मीलितचक्षुषो भटान् ।
श्वसितेन विवेद जीवता निहता इत्युपसृत्य जम्बुकः ॥ 50

रणसीम्नि ददर्श नारदो विजयं सुप्तनृपान्तरस्थितम् ।
स्वमूर्च्छितहस्तिमध्यगं मृगराजं विपिनक्षिताविव ॥ 51

अमलानि महार्हतां गतान्यतिचित्राणि चिरं धृतानि च ।
द्विषतां सिचयान्यहारयत्स्वयशांसीव विराटसूनुना ॥ 52

निजमूतगृहीतवाससो नृपतीन्वीक्ष्य ननन्द वासविः ।
अरुणापहृतच्छवीनुडून्दिवसारम्भ इवोष्ण दीधितिः ॥ 53

वियदन्तविशृङ्खलक्रमं जयशङ्खध्वनिमस्य धन्विनः ।
श्रुतिशूलमशृण्वतामभूत्स्वपनं तत्कुशलाय भूभुजाम् ॥ 54

अथ गन्तुमना जयावहं उपसंहृत्य[1] तदस्त्रमर्जुनः ।
इषुभिः प्रणनाम तद्विदं चरणान्तः प्रहितैः पितामहम् ॥ 55

प्रतिबुध्य सलज्जमुत्थितो विजयं द्रष्टुमपारयन्पुनः ।
हतशेषमवाङ्मुखं ह्रिया बलमादाय जगाम कौरवः ॥ 56

पुनराहितकार्मुकस्तरौ श्रितपोटाकृतिरिन्द्रनन्दनः ।
रथिना सह मात्स्यसूनुना धृतरश्मिः पुरसंमुखोऽभवत् ॥ 57

विजयी गृहमागतो नृपः श्रुतवान्गोपमुखात्सुतोदयम् ।
प्रजहर्ष सतां हि योगतः सुजनो याति पुनः पुनश्शुभम् ॥ 58

---

1. प्रति० A.

कृतिनां प्रथमो धनञ्जयः पथि भूमिञ्जयमित्थमब्रवीत् ।
स्वजनाय निवेद्यतामियं विजयस्त्वेन समार्जितस्त्वया ॥ 59

त्रपया विधुरोऽसि चेदिमं वद पित्रे सुरपुत्रनिर्मितम् ।
कथयिष्यसि मत्कृतं पुन र्नृपतौ श्वः प्रकटीकृतात्मनि ॥ 60

प्रतिपद्य तथेति तद्वचो नवधूपच्छुरितध्वजांशुकम् ।
पुरमाप पुरस्कृतोत्तरां ध्वजिनीं प्रत्युदितां समानयन् ॥ 61

विजयस्तु सखीजनैस्स्तुतः कुरुवीरांशुकदानतोषितैः ।
नयति स रथं नृपालयं प्रविकीर्णप्रसवेन वर्त्मना ॥ 62

अवरुह्य रथान्नृपात्मजः प्रणमत्कञ्चुकिवर्गसेवितः ।
अवरोधनसद्मनि स्थितं पितरं प्रीतमना ननाम सः ॥ 63

शकलीकृतवर्मनिस्सृतक्षतजज्ञेयशरव्रणाञ्चितम् ।
सदयं परिषस्वजे सुतं दृढमालिङ्गितुमुत्सुकोऽपि सः ॥ 64

तमुपान्तगते सविस्मयं यतिनि न्यस्तदृशं नृपोऽवदत् ।
अयि वत्स[1] पृथेव जिष्णुना भवता सूतसुता प्रवीरसूः ॥ 65

वद वीर कथं तवाहवो गुरुमुख्यैरजनिष्ट कौरवैः ।
न हि जातु चरित्रमद्भुतं श्रुतमप्यातनुते वितृष्णताम् ॥ 66

स तु सस्मितमाह लज्जितो नृप जय्या भुवि कस्य कौरवः ।
चकिते मयि कश्चिदागत स्सुरसूनुः प्रबलान्व्यजेष्ट तान् ॥ 67

अचिरान्मम साध्यकारिणं कृतिनं द्रक्ष्यसि तं कृपानिधिम् ।
बहुना किमियं बृहन्नला ननुसर्वस्य शुभस्य कारणम् ॥ 68

---

1. वीर A.

इति वादिनमात्मजं नृपो बहु सत्कृत्य सुतं च वज्रिणः ।
मुदितस्स्वममंस्त पुत्रिणामखिलानामपि मूर्धनि स्थितम् ॥ 69

अपरेद्युरमी पृथासुता धृतदिव्यांशुकभूषणस्रजः ।
दिवमर्ककरा इव प्रगे विविशुर्मात्स्यसभां महौजसः ॥ 70

इति लंघितदुर्दशांश्च तान्मुदिता शोभयति स्म पार्षती ।
च्युतनैशतुषारविप्लवान्दिवसश्रीरिव पङ्कजाकरान् ॥ 71

अधिकं बभुरासनेषु ते निवसन्तो भुजदीप्तहेतयः ।
मलयाद्रितटेषु चन्दना विटपालीनभुजङ्गमा इव ॥ 72

नृपतिस्ससुतो गतस्सभां कृतिनस्तानवलोक्य विस्मितः ।
अवदत्क इमे ममासनान्यधितिष्ठन्ति विशङ्कचेतसः ॥ 73

यतिवेषभृता तवस्थितं सविधेयेन स एव धर्मजः ।
चतुरम्बुधिमध्यवर्तिनश्चरणावस्य नृपास्सिषेविरे ॥ 74

अनिलस्य सुतोऽयमूर्जितो भवता सूदपतिर्व्यधायि यः ।
अवतंसति यक्षसुभ्रुवां नवसौगन्धिकगन्धियद्यशः ॥ 75

इति वादिनमीषदुद्धतं स्मितवान्मात्स्यमवोचदर्जुनः ।
मरुतामपि विष्टराण्यमी ध्रुवमर्हन्ति न तावकं पुनः ॥ 76

अभिजातगुणाविमौ यमौ स्मरवाचस्पतिसन्निभावुभौ ।
तनयौ नवयौवनोद्धतौ[1] तुरगाणां च गवां च रक्षकौ ॥ 77

द्रुपदस्य सुतेयमुज्ज्वला निहिता या स्वगृहे सुदेष्णया ।
निहताः प्रबलेन यत्कृते निशि भीमेन शतं च कीचकाः ॥ 78

---

1. ०दयौ A.

इति वादिनि शुभ्रवाजिनि क्षितिपं व्याहरति स्म मारुतिः ।
अयमिन्द्रसुतो धनुष्मतां वशिनां च प्रथमो जगत्त्रये ॥ 79

बहुशोऽस्य परीक्ष्य विक्रमं भजतस्संयति कान्दिशीकताम् ।
स सुरस्य हरेर्ध्रुवं यशो मलिनं खाण्डववह्निधूम्यया ॥ 80

पुरवैरिणि यस्य सन्ततं चरितश्लाघनकम्प्रमूर्धनि ।
स्मृतनिर्दयगाण्डिवाहतिश्चकितेवाभ्रसरित्प्रकंपते ॥ 81

युधि नर्तयति स्म यो धनुर्ध्वनयन्दैत्यकबन्धसंहतिम् ।
तव वेश्मनि नर्तयंस्त्रियः स्थितवानेष मृदङ्गवादकः ॥ 82

विरताविति मारुतेर्गिरं पितरं व्याहरदुत्तरो वचः ।
युधि देवसुतस्स एष मां सुकृती मोचितवान्भयादिति ॥ 83

स तु मात्स्यपतिर्यथोचितं सदकार्षीन्मुदितः पृथासुतान् ।
अदिशद्विजयाय चोत्तरां वशिनेयं जगृषे स्नुषामुना ॥ 84

अथ दूतनिवेदितोदयांस्तान्हरिरागत्य कृती स भागिनेयः ।
वसुवृष्टिभिराततान पूर्णान् स्तनयित्नुर्नभसि ह्रदानिवाद्भिः ॥ 85

द्रुपदमगधकेकयाधिपप्रभृतिषु संमिलितेषु बन्धुषु ।
दुहितरमभिमन्यवे ददौ महितगुणेऽहनि मात्स्यभूपतिः ॥ 86

धौम्येन तस्य मिथुनस्य समागतेन
निर्वर्तिते परिणये विधिवत्प्रहृष्टाः
साकं मुकुन्दमुखबन्धुजनेन पार्था
मात्स्यस्य सद्मनि सुखं न्यवसन्प्रतीताः ॥ 87

**॥ इत्यगस्त्यपण्डितकृतौ[1] बालभारते महाकाव्ये एकादशस्सर्गः ॥**

---

1. A omits पण्डित.

# अथ द्वादशस्सर्गः

धर्मात्मजो बन्धुतया समेत
स्सुयोधनाल्लोभ्यविधेयबुद्धेः ।
हर्तुं भुवं स्वामथ विक्रमेण
वैरोचनेर्विष्णुरिवोदयुङ्क्त ॥ 1

प्रोत्सारिता दूतघनै र्भ्रमद्भिः
प्रत्याशमुद्गीर्णनिदेशतोयैः ।
उच्चेलुरुर्वीपतयस्तमाप्तुं
सरित्प्रवाहा इव वारिराशिम् ॥ 2

आपृच्छ्य पार्थानतिहृष्टचेताः
प्रत्यागमिष्यन्पुनरम्बुजाक्षः ।
पुरीं निजां मात्स्यपुराद्यासी
त्पूषेव पूर्वाचलतः प्रतीचीम् ॥ 3

पार्थस्य विज्ञाय चरैः प्रवृत्तिं
विसृज्य राजन्यगणायदूतान् ।
अर्थी स्वयं द्वारवतीमगच्छ
त्सुयोधनस्सोऽपि सुतो मघोनः ॥ 4

प्रणम्यमानो धृतराष्ट्रसूनु
र्दौवारिकैर्वासगृहं प्रविष्टः ।
तल्पे शुभे दुग्धपयोधिकल्पे
शयानमालोकत शार्ङ्गपाणिम् ॥ 5

तस्मिञ्छिरोभागनिवेशितेऽस्य
भद्रासने मानधने निषण्णे ।
प्रविश्य पार्थो निभृतः प्रहृष्य
न्पादान्तिके शिष्य इवावतस्थे ॥ 6

प्रबुध्य शौरिः पुरतः स्थितेऽस्मि
न्निवेश्य निद्रालसपक्ष्मचक्षुः ।
वलन्मुखेनांसविवर्तितेन
कौरव्यमालोकयदासनस्थम् ॥ 7

श्रुत्वा तयोरागमनस्य हेतुं
कार्यं समं कर्तुमियेष शौरिः ।
भर्तुः कुरूणां प्रथमागतस्य
दृष्टस्य च प्राक् पुरुहूतसूनोः ॥ 8

नारायणाख्यान्दशकोटिसङ्ख्या
न्योधानशस्त्रं स्वमयोद्धृभावम् ।
विधाय भागौ वरणक्रियाया
मचोदयत्तावरविन्दनाभः ॥ 9

पुत्रो मघोनस्सुधियां पुरोगो
वव्रे सरोजाक्षमशस्त्रपाणिम् ।
अवाप्य गोपानपरस्तु सिद्धिं
स्वस्यैव मत्वा निरियाय मूढः ॥ 10

लब्ध्वा सहायं प्रथितप्रभावं
हृष्टे गतेऽस्मिन् सहगोपसैन्यैः ।
वृतो विशस्त्रः किमहं त्वयेति
कृतस्मितः पार्थमुवाच कृष्णः ॥ 11

बद्धाञ्जलिश्शौरिमसौ[1] बभाषे
सान्निध्यमात्रेण तवाहमेकः ।
अमन्दशस्त्रार्चिरमित्रसेनां
धक्ष्यामि वन्यां मरुता यथाग्निः ॥ 12

ततस्स तेनार्थितमन्वमंस्त
सारथ्यमीशो जगतां त्रयाणाम् ।
समाश्रितानामवनाय कर्म
नीचैरपि स्वीक्रियते महद्भिः ॥ 13

प्रीतस्स तस्यां पुरि वासराणि
द्वित्राणि नीत्वा सह माधवेन ।
लिप्सोर्निजां भूमिमजातशत्रो
र्ययौ सकाशं विघ्निनेव यत्नः ॥ 14

अक्षौहिणीनां महता भरेण[2]
क्षोणीमशेषामपि कम्पयन्तः ।
युयुत्सवः क्ष्मापतयोऽध्यवात्सु
र्विराटकौरव्यपुरोपकण्ठान् ॥ 15

कौन्तेयपार्श्वं महता बलेन
गच्छन्प्रहृष्टः पथि सत्क्रियाभिः ।
साह्यं प्रतिश्रुत्य सुयोधनाय
मद्राधिपो मात्स्यपुरीमयासीत् ॥ 16

---

1. ०चैनं० B.  2. बलेन A.

स तत्र पार्थं श्रुतमार्गवृत्तं
भूत्वा नियन्ता तनयस्य पूष्णः ।
तेजो निहन्यामिति भाषितेन
सन्तोष्य कौरव्यसकाशमागात् ॥ 17

पार्थोद्यमं सञ्जयतोऽवगम्य[1]
सन्धित्सतो बन्धुजनस्य वाचः ।
यथा न भेजे धृतराष्ट्रसूनु
स्तदाधिजज्ञे बहुदोषलिङ्गैः ॥ 18

अल्पैरहोभिश्शरणागतायाः
भारं हरिर्मे लघयिष्यतीति ।
भुजङ्गभर्तुः फणरङ्गभूमौ
हर्षान्ननर्तेव मही सकम्पा ॥ 19

आयोधनार्थं मिलतां नृपाणा
मुदञ्चिता सैन्यपरागराजिः ।
दिवो निवृत्तेव जवेन भूयः
पपात दिग्भित्तिषु पांसुवृष्टिः ॥ 20

आगामिनीनामसृगापगाना
मालिङ्गनायेव महार्णवौघाः ।
विघूर्णिताः क्षोणितलेऽतिमात्रं
प्रसारयन्ति स्म तरङ्गहस्तान् ॥ 21

नभस्स्थलाच्छोणितबिन्दुराजि
रारञ्जयन्तीगजवाजियोधान् ।
परिभ्रमन्त्याश्शिबिकान्तरेषु
पपात मृत्योरिव पादलाक्षा ॥ 22

1. निशम्य B.

पुरं कुरूणामभितोऽनुवेलं
परिभ्रमत्कङ्कसृगालसङ्घः ।
मिथश्शशंसाऽऽरसितच्छलेन
रणक्षितौ भाविनृमांससेवाम् ॥ 23

प्रसाधिकाभिः परिकर्मणोऽन्ते
धृतान्पुरस्तात्कुरुवीरवर्याः ।
आदर्शबिम्बानमलान्निजाभि
श्शून्यानपश्यन्प्रतियातनाभिः ॥ 24

वचांसि हाहेत्यशरीरसंस्था
न्याकर्णयामास जनोऽनुगेहम् ।
पिशाचिकानां पिशितोत्सुकानां
छाया अपि प्रैक्षत तालदीर्घाः ॥ 25

इत्थं तदुत्पातशतोपसृष्टं
पुरं कुरूणां पुरुषः पुराणः ।
अभ्यापतत्पाण्डवकौरवाणां
शान्तिं विधातुं प्रतिपन्नदौत्यः ॥ 26

तमागतं केतुपरिष्कृतायाः
पुरो विनिर्गत्य विचित्रयानाः ।
सर्वेऽपि दुर्योधनमन्तरेण
प्रत्युद्ययुश्शन्तनुसूनुमुख्याः ॥ 27

यथाक्रमं सत्क्रियया प्रहृष्ट[1]
स्सतैः परीतो नगरं विवेश ।

---

1. प्रहृष्टैः B.

राज्ञां निवेशैर्मुखरोपकण्ठं
वसुन्धराचक्रमिवार्णवोघैः ॥ 28

दिदृक्षवे पौरवधूजनाय
मुरारिमुख्यानुमिवापयान्तम् ।
पुरे पटीयान्प्रतिसौधगर्भं
बभ्राम माङ्गल्यमृदङ्गघोषः ॥ 29

त्यक्त्वा तदा मण्डनमर्धक्लृप्तं
क्रियासु चान्यासु कृतानपेक्षाः ।
अभ्रेषु विद्युल्लतिका इवाशु
नार्यः पदं हर्म्यतलेषु चक्रुः ॥ 30

प्रसाधिकामप्रतिपादयन्ती
लाक्षारसेनारचिताङ्गरागा[1] ।
विलिप्तपादाहरिचन्दनेन
विनिर्ययौ काचन संभ्रमेण ॥ 31

स्नातोत्थिता काचन दीर्घिकाया
स्तथैव यान्ती सलिलार्द्रमूर्तिः ।
प्रागेव सन्दर्शनतो मुरारेः
प्रस्वेदबिन्दुच्छुरितेव रेजे ॥ 32

काचित्प्रयान्ती पथि संभ्रमेण
विशेषकं कुंकुमकर्दमेन ।
पर्यस्तलग्नप्रतिमामुखेन्दौ
करस्थिते दर्पण एव चक्रे ॥ 33

1. ०आकलिताङ्गरागा B.

मा याहि गोपीजनचित्तचोरः
चेतस्त्वदीयं[1] स हरिष्यतीति ।
सख्यावचश्शौरिवचौघपूर्णे
नालं प्रवेष्टुं श्रवसी परस्याः ॥ 34

नितम्बिनीनामनुगामिनीनां
विघ्नं ततः कर्तुमिवेर्ष्ययान्या ।
वीथीं स्वकण्ठच्युतहारयष्टि
मुक्ताफलैश्शर्करिलां वितेने ॥ 35

मुरारये मूर्तमिवोपहर्तुं
चेतो निजं सम्भृतरागमन्या ।
करेण लीलाकमलं वहन्ती
जगामलक्ष्मीरिव जालमार्गम् ॥ 36

जगन्ति जेतुं जगतोमनोभू
रेकोनपर्याप्त इतीव मत्वा ।
प्रत्येकमेतासु परार्ध्यरूपो
जनार्दनस्तं जनयाम्बभूव ॥ 37

काचित्तदा साध्वसकम्पगात्री
प्रवातमाकन्दलतेव दृष्ट्वा ।
बिम्बं मणिस्तम्भगतं स्वकीयं
सखीति मुग्धा[2] मुहुराललम्बे ॥ 38

स्वेदाम्बुभिर्दन्तुरगात्रयष्टे
स्तत्राधिकश्वाससमीरणायाः ।

---

1. चित्तं॰ B. 2. मत्वा B.

कस्याश्चिदग्रे सवयोजनस्य
व्याजोऽभवत्सौधतलाधिरोहः ॥ 39

विलोकयन्ती घनकालमेनं
प्रवेपमानाङ्गुलिपल्लवाग्रा ।
रराज काचित्पुलकाञ्चिताङ्गी
सकुट्मलश्रीरिव नीपयष्टिः ॥ 40

अवाकिरन्नन्तिकमम्बुजाक्षं
क्रमेण पुष्पांजलिभिः पुरन्ध्रयः ।
नवारवेर्दीधितयो दिनादौ
बृन्दैरुडूनामिव मन्दराद्रिम् ॥ 41

क्रमादतिक्रम्य स राजमार्गं
द्वारक्षितौ स्यन्दनतोऽवतीर्णः ।
आलम्ब्य हस्तं विदुरस्य शौरि
र्विवेश हृष्टो इतराष्ट्रगेहम् ॥ 42

प्रत्युद्गतस्तत्र कुरूद्वहेन
भद्रासनस्थो विहितातिथेयः ।
अतोषयत्सूनृतया स वाचा
बन्धूनमर्त्यांत्सुधयेव पूर्वम् ॥ 43

ततो गतः क्षत्तुरसौ निकेतं
दृष्ट्वा पृथां पुत्रवियोगखिन्नाम् ।
आश्वासयद्द्रक्ष्यसि निर्जितारी
नल्पैरहोभिस्तनयांस्तवेति ॥ 44

कृताह्निकस्तत्र कृतार्थभाव
मासेदुषस्तल्पसमीपभाजः ।
रणैषिणां पाण्डुभुवामुदन्तं
क्षत्तुर्वदन्नेव निशामनैषीत् ॥ 45

बालातपप्रेक्ष्यतराम्बरोऽय
मानन्दिताशेषविलोचनाब्जः ।
प्राचीमिव प्रातरिनोऽम्बुजाक्षो[1]
वैचित्रवीर्यस्य सभां विवेश ॥ 46

स सर्वतोभद्रमिति प्रशस्त
मातस्थिवानामनमम्बुजाक्षः ।
निष्पन्दसभ्येक्षणलभ्यमूर्तिः
प्रज्ञादृशं भूपतिमाबभाषे ॥ 47

शमाय राजन्कुरुपाण्डवानां
समागतोऽस्मि प्रतिपन्नदौत्यः ।
सन्धत्स्व पार्थैर्निभृतैस्त्वदीया
न्निवार्य पुत्रानपथप्रवृत्तान् ॥ 48

उदग्रशौर्यैरुररीकृतैस्तैः
कैकेयपाञ्चलविराटयुक्तैः ।
एभिश्चपुत्रैर्गुरुभीष्ममान्यै
र्गुप्तात्त्वदिन्द्रोऽपि न किं बिभेति ॥ 49

भेदे तु जाते यदिपाण्डुपुत्रान्
हन्युस्सुतास्ते त इमान्मदोग्रान् ।

---

1. B ॰अब्जपाणिः A.

अथोभये वा वितथं व्रजेयुः
को नाम लाभो भवतस्तदा स्यात् ॥ 50

प्रणम्य पार्थाश्च भवन्तमाहु
रियन्ति वर्षाण्यनुभूतदुःखाः ।
तवाज्ञया केवलमंशभूतां
महीं पुनस्तात लभेमहीति ॥ 51

तत्संप्रति स्वीकुरुतान्प्रवीरां
स्तवोज्ज्वलस्यस्थितये कुलस्य ।
त्वदर्थमेते च नृपास्समेता
निवृत्तकृच्छ्राः प्रतियान्तु देशान् ॥ 52

नृपस्तमाभाषत किं नु कुर्या
मयं सुतो मे न वचः शृणोति ।
सान्त्वेन दाशार्ह निवर्तयैनं
कदध्वनस्सौहृदनिघ्नचेताः ॥ 53

उक्तश्च तेनैवमथासुरारि
र्विवृत्य वक्षो वलमानहारः ।
एकासनाध्यासितभानुसूना
वुपाश्रितं कौरवमाबभाषे ॥ 54

उत्पत्तिभाजश्शशिनोऽन्ववाये
भीष्मादिभिश्शासितशात्रवस्य ।
शतेन च भ्रातृभिरर्चिताङ्घ्रे
र्न ते मतिर्मुञ्च कुवर्त्मनीतिम् ॥ 55

साधँ दुरन्तैस्सचिवोपदेशै
लोभं विसृज्योभयलोकशत्रुम् ।
सङ्गम्य पार्थैस्सह सौहृदेन
हतद्विषं भुङ्क्ष्व महीमशेषाम् ॥ 56

तावत्सुतं व्याहरदाम्बिकेयः
प्रसीद बद्धोऽयमिहाञ्जलिस्ते ।
मन्युज्वरस्यौषधमार्तबन्धोः
शौरेर्वचः पथ्यमिदं पिबेति ॥ 57

तमूचतुश्शान्तनवो गुरुश्च
क्षेमाय सन्धत्स्व युधिष्ठिरेण ।
चापेषु मात्स्यप्रमुखा रणाग्रे
न सायकांस्सन्दधतां नरेन्द्राः ॥ 58

चिराय योगं कुरु पाण्डवानां
निरीक्ष्य राजन्यगणस्समेतः ।
प्रमोदजं मुञ्चतु वारि नेत्रै
र्न शोणितं पार्थशरक्षताङ्गैः ॥ 59

वचांसि लोकः प्रणयोचितानि
श्रृणोतु तेषां भवतां च हृष्टः ।
निर्घातघोरान्कुपितस्य सङ्ख्ये
समीरपुत्रस्य न सिंहनादान् ॥ 60

आलिङ्गनायोभयसैनिकानां
मिथोऽधिकं सम्प्रसरन्तु हस्ताः ।
विलापभाजां न तदङ्गनानां
विस्रस्तबद्धा भुवि केशहस्ताः ॥ 61

जगादशौरिं धृतराष्ट्रसूनु
 द्यूते न किंत्वत्सुहृदो जितास्ते ।
गता न किं वा विपिनं हृतस्वा
 वक्तुं न युक्तं तव मध्यनीतिम् ॥ 62

क्लिष्टा वनान्तेषु चिराय लब्ध्वा
 वृद्धौ विराटद्रुपदौ सहायौ ।
इच्छन्ति ते सम्प्रति हन्तुमस्मा
 न्किं ब्रूमहे हास्यमिदं लघीयः ॥ 63

भुवं समस्तां द्विषतो निहत्य
 लप्स्यामहे तैर्निहता दिवं वा ।
पुंसां पुनः क्षत्रकुलोद्भवानां
 यशस्करोऽयं विहितो हि धर्मः ॥ 64

इत्युक्तवन्तं सदसः प्रयान्तं
 राधेयदुःशासनसौबलास्ते ।
अन्वग्ययुः पापमुपात्तरूपं
 मूर्ता इव क्रोधमदप्रमोहाः ॥ 65

गते तु तस्मिन्नवमत्य वाच
 स्त्रस्तांत्समस्तानवदन्मुकुन्दः ।
इयं कुरुणामपि भूर्यदिस्या
 द्भवेदशेषेयमकौरवा भूः ॥ 66

अन्यैस्त्रिभिस्सार्धममुं निबध्य
 विधीयतां राज्यमजातशत्रौ ।
पुरावमन्ता पितरं स्वमेव
 न मातुलः किं निहतो मयासीत् ॥ 67

प्राङ्निग्रहादस्य दुराग्रहस्य
वंशस्सुधांशोर्भविताऽनपायः ।
निर्वासनात्कालियपन्नगस्य
कलिन्दजाया इव पूर्वमोघः ॥ 68

तावत्सभां सात्यकिरेत्य सद्य
स्सर्वान्सदस्यानिदमाबभाषे ।
निर्वर्त्यते साधु चिराय सन्धिः
श्रीः कौरवी च स्थिरतामुपैति ॥ 69

निरुद्यमाः पाण्डुसुता मुरारौ
बद्धे भवन्तीति चिराय मूढः ।
त्रिभिस्सहान्यैर्धृतराष्ट्रसूनु
र्बन्धुं सतामिच्छति बन्धुमेनम् ॥ 70

यदूद्वहस्तेन निबध्यते चे
न्निरुध्यतेऽग्निस्सिचयाञ्चलेन ।
निस्तीर्यते दोर्युगलेन वार्धिः
पतिर्गिरीणां ध्रियते च मूर्ध्ना ॥ 71

अत्राहमेकः कुरुराजपुत्रा
नद्यैव बाहुद्रविणावलिप्तान् ।
अन्यांश्च हन्यां युधि वीरवर्या
न्यथा भवेत्पाण्डुसुतप्रतिज्ञा ॥ 72

नृपो वचस्तस्य निशम्य भीतः
क्षत्त्रा समानाय्य जगाद पुत्रम् ।
त्वया न बध्येत बलैर्निबद्धा
त्वमेव बद्धोऽसि कृतान्तपाशैः ॥ 73

अथाच्युतः कौरवमाह साध्यं
सञ्चिन्त्य संयन्तुमिहेच्छसि त्वम् ।
पश्यासहायत्वमिति ब्रुवाणः
प्रादर्शयत्संसदि विश्वरूपम् ॥ 74

घोरं वपुर्धारयतो महीय
स्सभां द्विधेवारचयंत्समस्ताम् ।
अस्याट्टहासध्वनिरुद्धदिक्षु
मुमूर्छ तस्य श्रवणाच्च लोकः ॥ 75

देवो महानम्बुजभूरमर्त्याः
पार्था धृतास्त्रा यदवश्च सर्वे ।
अङ्गुष्ठमात्राद्वपुषस्तदीया
दाविर्बभूवुः प्रलयार्कभासः ॥ 76

उत्तुङ्गदोस्स्तम्भसहस्रभीमं
विजृम्भमाणामलदीप्तिजालम् ।
समस्तलोकाश्रयतामबाधं
सभान्तरे धाम तिरश्चकार ॥ 77

इतस्ततः कण्वपुरोगमाना
मुद्भिन्नरोम्णां परिषन्मुनीनाम् ।
अंसस्खलच्चीरजटाकलापा
मानन्दनृत्तोत्सवमन्वतिष्ठत् ॥ 78

पतिः कुरूणामपि लब्धचक्षुः
गूढं गिरामर्थमकर्तृकाणाम् ।
दृष्ट्वा निधिं रिक्त इव प्रहृष्ट
श्चिराय तुष्टाव पुमांसमाद्यम् ॥ 79

तस्याकृतिं वीक्ष्य निमीलयन्तो
नेत्राणि तेजोनिहतानि भूपाः ।
भूयः श्लथैर्वेपथुमद्भिरङ्गै
रपेतसंज्ञा इव पेतुरुर्व्याम् ॥ 80

त्वां वीक्ष्य धन्यो भगवत्प्रभावा
त्पश्येयमन्याननया दृशेति ।
नृपस्य वक्तुस्सह चक्षुषैव
दिव्यं त्रिधाम्ना समहारि रूपम् ॥ 81

दिष्ट्या चिरात्परिणतं रणमेव ताव
न्निर्यान्तु भूमिपतयस्सह वाहिनीभिः ।
द्रक्ष्यन्ति तत्र चरितानि पृथासुताना
मित्युक्तवान्मुररिपुर्निरगात्सभायाः ॥ 82

अथ रथवरमाश्वैस्सैन्यमुख्यैश्चतुर्भिः
दृढतरमधिरूढः क्षत्तुरालम्ब्य हस्तम् ।
अनुगतमखिलं तद्राजकं वारयित्वा
परिमितपरिवारः पार्थपार्श्वं प्रतस्थे ॥ 83

**इत्यगस्त्यकृतौ बालभारते महाकाव्ये**
**द्वादशस्सर्गः**

# अथ त्रयोदशस्सर्गः

अथापरेद्युः कथिताभिजात्या
कर्णं विभेत्तुं धृतराष्ट्रजेभ्यः ।
भागीरथीतीरमवाप कुन्ती
यत्र स्थितोऽसौ नियमेन युक्तः ॥ 1

मातात्मजस्यार्कनिविष्टदृष्टेः
ध्यानावसानं प्रतिपाल्य तस्थौ ।
प्रायस्तदंशं चिरसङ्गृहीतं
पयः स्तनाभ्यां मुहुरुद्वहन्ती ॥ 2

ततो जपान्ते जननीं विलोक्य
कृती तदीयागमकारणज्ञः ।
राधाभुवं सूतसुतं स्वमुक्त्वा
ननाम गौरीमिव कार्तिकेयः ॥ 3

आनन्दजं दर्शनरोधि दृष्टे
रावर्तयन्त्यश्रुविवर्तितायाः ।
उदीरिताशीर्यदुराजपुत्री
कृताञ्जलिं पुत्रमिदं जगाद ॥ 4

माता न राधा जनको न सूतः
कौन्तेय नन्वेष रविः पिता ते ।
भ्रातॄन्भवान्पाण्डुसुतानबुध्वा
वृतश्शिशुत्वे धृतराष्ट्रसुतैः ॥ 5

ततः परं प्राप्नुहि तानमीषु
स्थातुं न युक्तं विदितात्मनस्ते ।
किमन्यपुष्टश्चिरवर्धितोऽपि
करोति वासं बलिपुष्टयूथे ॥ 6

अरीनसह्यप्रसरान्विजित्य
सिंहासनारूढमजातशत्रुः ।
त्वां राजसूयावभृथाप्लुतेन
मूर्ध्ना नमत्वञ्जलिमादधानः ॥ 7

गृहीतदेहाविव वह्निवातौ
भुवं प्रपन्नाविव पुष्पवन्तौ ।
सहोदरौ वामभिजातयोगौ
कर्णार्जुनौ नन्दतु वीक्ष्य लोकः ॥ 8

स्मित्वा ततोऽसौ जननीमवादी
दुपस्थिते वीरविनोदकाले ।
भजामि ते यद्यहमत्र पुत्रा
न्किं मां क्षितौ वक्ष्यति वीरलोकः ॥ 9

गृहीतहेमाम्बुघटेन येन
ममाङ्गराज्ये विहितेऽभिषेकः ।
राजन्यकोटीरनिवेशिताङ्घ्रे
रर्धासने यस्य सुखं न्यषीदम् ॥ 10

विश्वस्य मां यः प्रबलैरजस्र
माशैशवात्पाण्डुसुतैर्व्यरौत्सीत् ।
मद्दोःप्लवेनैव दुरुत्तरेण
जागर्त्यनीकार्णवमुत्तितीर्षुः ॥ 11

त्यजामि तं चेदनघं सखायं
त्यक्तो यशोभिश्चिरसंगृहीतैः ।
उपघ्नभूतश्च कृतघ्नताया
गर्ह्यो भविष्याम्युभयत्र लोके ॥ 12

तदब्जिनीपत्र इवाम्बुलेश
स्सक्तो न मे चेतसि ते निदेशः ।
तथापि नैवागमनं वृथा स्या
त्पार्थादृतेऽन्यांश्चतुरो न हन्याम् ॥ 13

साम्येन शौर्यस्य समीकभूमौ
स मां हनिष्यत्यथ वाऽहमेनम् ।
मातस्सुताः पञ्च तव स्युरस्मि
न्हते सकर्णा मयि वा सपार्थाः ॥ 14

इत्थं वदन्तं कुरुवीरपत्नी
सुतं सधैर्याऽच्युतमालिलिङ्ग ।
भयेन पर्याकुलितो वचस्त
त्सत्यापयामास च सत्यसन्धः ॥ 15

अनन्तरं द्वावनतिप्रहृष्टौ
निजं निकेतं प्रतिजग्मतुस्तौ ।
पुत्रं सुता भोजपतेरलब्ध्वा
मातुस्स चाशामविधाय कर्णः ॥ 16

तदागते पुण्य इव द्वितीये
दिने जयाशंसिनि पुण्यलग्ने ।
अभ्यर्च्य शस्त्राण्यखिलानि योधै
र्नृपः कुरुक्षेत्रमथ प्रतस्थे ॥ 17

व्रजत्सु शीर्षं चलतां रथानां
निधिष्ववपां चक्ररजोभरेण ।
अक्षौहिणीस्सप्त जनः पयोधी
नन्यानमंस्त द्रुहिणोपसृष्टान् ॥ 18

बले चलत्याकुलशैलसन्धे
र्बभार भारातिशयेन भूमेः ।
निमग्नरत्नानि नितान्तमन्त
रुद्वृत्तनेत्राणि शिरांसि शेषः ॥ 19

सेनारजोभिः प्रसरद्भिरग्रे
निर्पीततोयानि सरांसि नागाः ।
पूर्णानि चक्रुर्मदवारिपूरैः
श्रेयो विधत्ते महतां हि योगः ॥ 20

सरस्वतीरोधसि तत्र तत्र
सुशीतलच्छायतमालषण्डे ।
अतीतवर्त्मानि महीपतीनां
निवेशयामास बलानि पार्थः ॥ 21

उदस्तनानातटवेश्मजाल
मुद्घोषमुद्घापणपण्यमार्गम् ।
उदाररथ्यं शिबिरं तदीयं
पुरादपि प्रेक्ष्यतरं बभूव ॥ 22

ततश्च दक्षाध्वरदेशमिन्द्रो
रुद्रैरिवैकादशभिः प्रतीतैः ।
अक्षौहिणीशैरनुगम्यमानः
पतिः कुरुक्षेत्रमगात्कुरूणाम् ॥ 23

उत्तम्भितैर्भूपनिवेशसीम्नि
स्थूलैस्तदाकीर्णमनेकवर्णैः ।
तुषारहेमाञ्जनशैलशृङ्गै-
स्तलं धरित्र्या इव वज्रभग्नैः ॥ 24

गाङ्गेयमाकर्ण्य सुयोधनेन
कृताभिषेकं पृतनाधिपत्ये ।
स्कन्दं वृषेव द्रुपदस्य पुत्रं
चकार सेनान्यमजातशत्रुः ॥ 25

आगामि संयद्भुवि बान्धवाना-
माभीलमालोकयितुं न शक्तः ।
सारस्वतान्काञ्चनतीर्थभेदां
सिषेविषुः प्रास्थित सीरपाणिः ॥ 26

भीष्मेण भर्तुः पुरतः कुरूणा-
मङ्गाधिभूरर्धरथो व्यधायि ।
सोऽपि क्रुधा सङ्गिरते स हेते-
रधारणं संयति तद्वधान्तम् ॥ 27

श्रुत्वा प्रतिज्ञां सुहृदो विषण्णं
सुयोधनं सिन्धुसुतो बभाषे ।
पार्थादयः प्राक् प्रबला मयोक्ता
ये वत्स योत्स्ये युधि तैस्त्वदर्थम् ॥ 28

शिखण्डिनं त्वेकमहं न हन्यां
भूत्वा पुरा स्त्री स जगाम पुंस्त्वम् ।
नेक्षे रणाग्रे न च योधयामि
स्त्रीं पूर्वमेषा खलु मत्प्रतिज्ञा ॥ 29

शिखण्डिनो वृत्तमतीव चित्रं
शुश्रूषमाणेन सुयोधनेन ।
पृष्टः कुमारस्त्रिदशापगाया
स्तत्सर्वमप्यारभताभिधातुम् ॥ 30

स्वयं वरे बाहुबलेन पूर्वं
कन्यात्रयं काशिपतेरहार्षम् ।
साल्वस्य रक्तान्तिकमापदेका
भ्रात्रा परे द्वे तु ममोपयेमे ॥ 31

अम्बा तु तेनारिहृतेत्यपास्ता
परानुरक्तेति मया च पश्चात् ।
वधाय मे बाढमनर्थहेतो
स्तप्तुं तपः प्राप वनं मुनीनाम् ॥ 32

स सन्निधिं तत्र कृती तदानीं
मुनीन्दिदृक्षुर्भृगुभूरकार्षीत् ।
क्रौञ्चच्छिदा येन सराजहंसा
चक्रे हतक्षत्रकुला च भूमिः ॥ 33

तैस्सत्कृतेन प्रबलार्तिरग्रे
ऽबला शुचो हेतुमनेन पृष्टा ।
बाष्पेण पर्याकुलितैः कथंचि
त्पदैर्यथावृत्तमशंसदस्मै ॥ 34

अलं शुचा मद्वचनेन भीष्मः
शिष्यस्य विद्यामिव मानये त्वाम् ।
साल्वोऽथ वा स्वीकुरुतां न चेत्तौ
वृत्तं न वेत्तः किमुभौ मदीयम् ॥ 35

ते नैवमुक्तेयमुवाच भूयो
न मे द्वयेऽस्मिन्नभिलाषि चेतः ।
तथा प्रसादं कुरु घातयेयं
त्वया रिपुं शौर्यनिधे यथेमम् ॥ 36

वक्ष्यामि शस्त्रं शरणागतानां
त्राणार्थमित्याचरितां प्रतिज्ञाम् ।
संस्मृत्य रामो मुनिभिः परीतः
साम्बः कुरुक्षेत्रमुपाजगाम ॥ 37

आनाय्य शिष्यैरुपतस्थिवांसं
मामर्हणान्ते मुदितश्शशास ।
विभ्रंशिता सौख्यपथस्त्वयेयं
संयोज्यतां वत्स यवीयसीति ॥ 38

इमां ग्रहिष्ये न परत्र सक्ता
मिति ब्रुवाणं सरुषाऽवदन्माम् ।
हसो न गृह्णासि न चेद्वचो मे
बाणो हरिष्यत्यधुना शिरस्ते ॥ 39

तमब्रवं क्रुद्धमुदीर्णमन्युं
न बन्धकीं सद्मनि वासयेयम् ।
न त्वां सहे धर्मविरुद्धवाच
मुन्मार्गवर्ती गुरुरप्यमान्यः ॥ 40

उद्वृत्तशासी ननु पौरवोऽहं
त्वां योधयिष्यामि गृहाण शस्त्रम् ।
न ब्रह्महत्या च न चायशो मे
मृधे हतेऽपि त्वयि योद्धरि स्यात् ॥ 41

मा भून्मदस्त्रावदनीकभूमि
ष्वेकेन भूपा निहता मयेति ।
तदा तु जातो यदि जाह्नवेयो
दोर्दर्परूपो दवथुः कुतस्ते ॥ 42

ततस्तु रक्तह्रदमज्जनेन
प्रायो दधानं परिपाटलत्वम् ।
अमर्षकम्पश्लथबन्धमीष
द्रुध्वा जटाभारमिषूंत्ससर्ज ॥ 43

आवामुभौ वर्मभृतौ रथस्था
वाकृष्टचापोदितबाणवर्षौ ।
सामर्षमन्योन्यमयोधयेतां
निवार्यमाणावपि जह्नुकन्या ॥ 44

क्रौञ्चच्छिदो निर्जितकार्तिकेया
न्विज्ञातवीर्यान्कृतवीर्यसूनौ ।
परासिताशेषनरेन्द्रमूर्ध्नः
प्रायुङ्क्त बाणान्मयि रैणुकेयः ॥ 45

मिथश्शरैर्मर्मसु विध्यतोनौ
दृष्ट्वा जयं तस्य विपर्ययं च ।
अम्बा मदीया च रथोपकण्ठे
प्रहर्षशोकौ मुहुरन्वभूताम् ॥ 46

वैमानिकानां विदधन्ति भीति
मस्त्राण्यवर्षन्मयि जामदग्न्यः ।
तैरेव तस्मादहमप्यवाप्तै
रवारयं तान्यनिवार्यसत्त्वः ॥ 47

स्वसे यदस्त्रं वसुभिर्वितीर्णं
प्रस्वापनं तन्मयि सन्दधाने ।
रामो गुरुस्ते न विमाननीय
इत्यम्बरे चेरुरमर्त्यवाचः ॥ 48

तथेति संहृत्य तदस्त्रवर्यं
रथावतीर्णो रचितोपयानः ।
जन्यान्निवृत्तं जमदग्निसूनुं
प्राणंमिषं प्राणहरं नृपाणाम् ॥ 49

स मामवादीन्मुदितो मुनीन्द्र
स्त्वया जितोऽस्मि प्रथितास्त्रभाग ।
जगत्त्रये कोऽपि न ते समानः
शिष्यप्रकर्षो यशसे गुरूणाम् ॥ 50

अम्बामथाहूय नदीसुतोऽयं
मया न जय्यो महनीयसत्त्वः ।
व्रजे हितं देशमिति ब्रुवाण
स्तिरोदधे तिग्मकरप्रकाशः ॥ 51

पुरं प्रयाते मयि मा पुनर्मां
जिघांसती हैमवतीवनान्ते ।
आराधयामास तपोभिरीशं
स्त्रियो विशेषेण हि बद्धवैराः ॥ 52

आसेदिवांसं कृतसन्निधानं
पतिं पशूनां कृतिनां निधानम् ।
स्वेनैव हन्तुं विजयोत्थितं मां
वव्रे वरं काशिनृपस्य पुत्री ॥ 53

स्मित्वा स तामाह विसृज्य देहं
पाञ्चालभर्तुर्दुहितुस्त्वमेहि ।
कालेन पुंस्त्वं प्रतिपद्य भद्रे
भीष्मस्य मृत्युर्भवितासि युद्धे ॥ 54

इत्थं वरं दातरि कालहन्त
र्यन्तर्हिते संभृतरोषवह्निः ।
प्राविक्षदुद्दीप्तमसौ कृशानुं
ज्योत्स्नामहस्सान्ध्यमिव प्रभाते ॥ 55

मया जितः प्राग्द्रुपदोऽन्तरेऽसिं
न्पुत्रार्थमानर्च पुरामरातिम् ।
स चाविरासीद्वरदानशौण्डः
कृता भवे त्कामदुघा हि भक्तिः ॥ 56

जगाद चैनं नृपते सुता ते
सम्पत्स्यते यास्यति साऽथपुंस्त्वम् ।
यथेच्छसि त्वं स तथा निहन्ता
भीष्मस्य जायेत वधे निमित्तम् ॥ 57

इत्थं वरं लब्धवतोऽस्य शम्भो
रस्नेहसाल्पेन नृपस्य देवी ।
शिखण्डिनीं नाम सुतामसूत
सिद्धिं क्रिया सम्यगनुष्ठितेव ॥ 58

स्त्रीत्वं प्रयत्नेन नृपस्स तस्याः
प्राच्छादयत्प्राज्ञ इवाभिमानम् ।
हृष्टः शिखण्डीति कृताभिधायाः
पुंवत्क्रियाः कारयति स्म सर्वाः ॥ 59

प्रतिष्ठमात्तं सुलभस्तनेन
वपुस्तदीयं वयसा विलोक्य
तां शिक्षिताशेषकलां स धीमा
नुद्वाहयामास दशार्णकन्याम् ॥ 60

तां भर्तृभूतां विजने नवोढां
स्त्रियं विदित्वा वदति स्म धात्र्यै ।
विज्ञाय तस्याश्च दशार्णनाथः
प्रतारितः पार्षतमभ्ययासीत् ॥ 61

श्रुत्वाऽभियान्तं तमुदग्रसैन्यं
पाञ्चालभर्ता बलवद्भयार्तः ।
अभ्यर्च्य पुण्यायतनेषु देवं
वरं वितीर्णं सफलं ययाचे ॥ 62

त्रासं विदित्वा स्वनिमित्तमस्य
शिखण्डिनी नक्तमुदूढदुःखा ।
एकाकिनी काननमेत्य कण्ठा
त्खड्गेन शीर्षं यतते स्म हन्तुम् ॥ 63

यदृच्छयागत्य ततो दयालु
स्तथोद्यतां तां विनिवार्य यक्षः
श्रुतप्रवृत्तिर्निजगाद दत्त्वा
स्त्रीत्वं तदेवं मम धत्स्व पुंस्त्वम् ॥ 64

उपप्लवेऽस्मिन्महति प्रशान्ते
ततो गतेऽन्येहसि मासमात्रे ।
आयास्यसि त्वं भवनं मदीयं
स्वचिह्नयोर्नौ परिवर्तनाय ॥ 65

इत्थं मिथस्तौ समयं विधाय
स्वलक्षणव्यत्ययमादधाते ।
हृष्टौ गृहांश्च प्रतिजग्मतुस्तौ
सतामयत्नः खलु भद्रलाभः ॥ 66

शिखण्डिनोक्तं स निशम्य वृत्तं
शिवं प्रशंसन्नृपतिः प्रहृष्टः ।
पुरोहितेन प्रहितेन मार्गं
सम्बन्धिनं शान्तरुषं वितेने ॥ 67

अथ व्यतीते समये शिखण्डी
यक्षान्तिकं प्रास्थित सत्यसन्धः ।
स चावदत्त्वं कृतवान्यथोक्तं
त्वद्रक्षणादन्यदिदं ममासीत् ॥ 68

ह्रिया गृहेष्वेषु दिने स्थितं मां
सदस्यदृष्ट्वा धनदः कदाचित् ।
स्थाणुः कुतो वा वसतीति पृष्ट्वा
शुश्राव सख्युर्मम वृत्तमेतत् ॥ 69

अयं तु दृप्तो वनितैवभूया
न्नरः शिखण्डीत्यशपत्सरुष्टः ।
यक्षानुरोधेन ततः प्रसन्नो
भवद्वधान्तं वदति स्म शापम् ॥ 70

निशम्य तत्प्रीतमनाश्शिखण्डी
कृताभ्यनुज्ञो धनदानुगेन ।
प्रत्यागतस्स्वं नगरं क्रमेण
द्रोणादवापास्त्रविशारदत्वम् ॥ 71

इत्थं तदम्बाचरितं निशम्य
भीष्मं प्रशंसत्सु नराधिपेषु ।
तेनैव मेने जितभार्गवेण
पार्थान् जितां त्संयति धार्तराष्ट्रः ॥ 72

शशिधरणिभुजां शुभाः प्रतिज्ञा
निशमितवान् मदसः क्षणादुदस्थात् ।
नियमिततिमिरौघतद्विभूषा-
मणिरुचिनिष्फलहस्तदीपभामः ॥ 73

अन्तः प्रविश्य पटमण्टपमध्यभाजि
तल्पे भुजे सुखमशेत नराधिनाथः ।
वाचालकंकणमनोज्ञकराम्बुजाभि-
रास्फालितोरुयुगलो वरवर्णिनीभिः ॥ 74

## इत्यगस्त्यपण्डितकृतौ[1] बालभारते महाकाव्ये त्रयोदशस्सर्गः

1. A omits पण्डित.

# अथ चतुर्दशस्सर्गः

तावच्च प्रथनमुखे मरुत्त्वभाजां
शूराणां गणमभिसर्तुमुत्सुकानाम् ।
श्रेयोभिस्सह सुरवारसुन्दरीणां
सा रात्रिः परिणतिमासदत्क्रमेण ॥ 1

निस्साणध्वनिभिरनीकिनीचराणां
सन्नाहं शिबिरयुगे निवेदयद्भिः ।
सन्त्रस्ताकुलमकरा निशात्ययेऽपि
प्रक्षोभं जलनिधयोऽभजन्त भूयः ॥ 2

शीतांशु र्निजकुलजन्मनां नृपाणां
संग्रामे निधनमवेक्षितुं न शक्तः ।
शृङ्गाणि क्षण मवलम्ब्य रश्मिहस्तै
रस्ताद्रेरपरमपां निधिं प्रपेदे ॥ 3

उन्नम्रध्वजपटपल्लवाहतिभ्यः
सन्त्रस्तैर्ध्रुवमुडुभिर्विमुच्यमाने ।
आकाशे पुनरपि सैन्यहस्तिमुक्तै
रापेदे वमथुकणैस्तदीयलक्ष्मीः ॥ 4

तत्कालस्फुटदिभगण्डभित्तिनिर्य-
द्दानाम्भोलहरिविहारकाङ्क्षयेव ।
आमीलद्दलपुटमीलिताग्रपक्ष्मा
ण्यत्याक्षुः कुमुदवनानि चञ्चरीकाः ॥ ५

आरूढद्विपरथवाजिनां भटानां
धौतस्य प्रहरणमण्डलस्य भासा ।
राजन्यव्यतिकरदर्शनाभिलाषा
दावृत्तिं पुनरपि रात्रिराततान ॥ 6

आवातक्षणकबलीकृतान्तरिक्षे
द्राघिष्णोः कलकलतो बलाम्बुराशेः ।
सन्त्रस्ता इव निजवल्लभान्पतत्रै
रालिंगन्त्सपदि रथाङ्गमल्लताङ्ग्यः ॥ 7

तिष्ठन्तीं समरविहारकौतुकेन
स्मेरेषु क्षितिपतिवक्त्रपङ्कजेषु ।
सन्द्रष्टुं श्रियमिव तादृशीमभूव
न्नुन्नप्रस्मितमुखवारिजा नलिन्यः ॥ 8

आगच्छद्वरवरणोन्मुकद्युपोषा
भूषांशुप्रकरधियं प्रकाशयन्तः ।
काश्मीरद्रवरुचयः कठोरभानो
राक्रामन्च्छतमखदिङ्मुखं मयूखाः ॥ 9

निर्गच्छद्बलयुगलं निवेशभूमेः
संक्षुभ्यज्जलधिनिभं भ्रुवं दिदृक्षुः ।
आरूढः प्रजवितुरङ्गमं शताङ्गं
पूर्वाद्रेस्तटभुवमाससाद पूषा ॥ 10

आकम्पध्वजलतिकावनाभिरामैः
पर्यन्तप्रसृतमदापगाप्रवाहैः ।
प्रख्यातं दिशि दिशि संश्रितैरवादी
द्वीपत्वं द्विपपत्तिभिर्बलाम्बुराशेः ॥ 11

भूपालव्रजभुजभूषणेषु भूषा
खड्गेषु प्रतिफलिताकृतिर्बभासे ।
आशङ्कय प्रतिकलमात्मबिम्बभेदं
शूराणां निधनमिवागतो निषेद्धुम् ॥ 12

आदिष्टा इव सुभटैर्घटा गजाना
मालोक्य श्रवणनिरस्तभूपरागम् ।
विक्षिप्तैर्दिवि करशीकरैर्विनेनुः
संसिक्तं सुरवनितावतारमार्गम् ॥ 13

छत्राणामुपरि निरुद्धभानुभासा
मुद्धूतं तिमिरमधस्तिरस्कृताशम् ।
क्षोणीभृन्मुकुटमतल्लिकामणीनां
श्रेणीभिर्निखिलमुदंशुभिर्निरस्तम् ॥ 14

तत्तादृग्भृगुसुतशौर्यमाक्षिणीं क्ष्मां
दीप्तश्रीस्तिलकयति स्म पाण्डुसेना ।
जैत्रस्तां विजयरथः प्लवङ्गकेतु
र्दैत्यारिस्तमपि गृहीतसूतभावः ॥ 15

पर्यन्तस्थितयमदेशिकप्रणुन्नौ
सञ्चारप्रचलितविश्वमेदिनीकौ ।
दुर्दान्ताविव करिणौ रणोत्सवाय
व्यूहौ द्वावभिमुखतां रयादयाताम् ॥ 16

भीष्मादीनुरुबलवर्तिनः किरीटी
गाण्डीवानलशलभान्विचिन्त्य बन्धून् ।
शोकार्तो बहलदयारसार्द्रचेता
यन्तारं यदुकुलधुर्यमाबभाषे ॥ 17

कृष्णैतान् कुरुसुतमित्रबन्धुभूतान्
सङ्ग्रामे विगतघृणं निहत्य लभ्ये ।
दुष्कर्मव्यतिकरतापकीर्तिपात्रे
वाञ्छा मे सुखलवलाञ्छिते न राज्ये ॥ 18

इत्युक्त्वोज्झितधनुषं रथे निषण्णं
कृष्णस्तं कृतमधुरस्मितो बभाषे ।
गाण्डीविन्किमिदकाण्ड एव तावत्
कातर्यं कलयसि शैलराजसार: ॥ 19

धीराणां त्रिजगति मानभूषणानां
शूराणां शुभयशसां त्वमग्रगण्य: ।
आचारं न निजकुलोचितं विहातुं
युक्तं ते विजयफलाभिमुख्यभाजम् ॥ 20

कारुण्यं यदि वितनोषि बन्धुतायां
सज्जस्त्वं रणभुवमागत: किमर्थम् ।
त्यक्तास्त्रं गणयति भूभुजां गणस्त्वां
त्रस्तं न स्वजनवधे दयालुमेषः ॥ 21

सर्वेषां भवनिधने निमित्तमेषां
पश्यैते ननु निहता मयैव पूर्वम् ।
उक्त्वैवं कुरु सदसि प्रदर्शितं प्राक्
पार्थाय प्रकटयति स्म विश्वरूपम् ॥ 22

स्वं वीक्ष्य प्रकटचराचरप्रपञ्चं
भीष्मादीन्वदनशतैर्ग्रसन्तमुग्रै: ।
त्रस्ताय प्रथितमदर्शयत्स तस्मै
सारथ्यव्रतनिरतं तदेव रूपम् ॥ 23

दैतेयद्विषदुपदिष्टदिव्यतत्त्व-
ज्ञानाम्भःपरिहृतमोहपङ्कबन्धः ।
पूतात्मा रथगतमाददे किरीटी
गाण्डीवं सह विजयाशया रिपूणाम् ॥ 24

आखेटस्तदनु नरेन्द्रसिंहयूनां
पाञ्चालीपरिभवदुःखदावदूष्मा ।
अस्त्राणां नवरुधिरासवोत्सुकाना
मापानं बलयुगलस्य जन्यमासीत् ॥ 25

पादातप्रहितनिशातभल्लकृत्ता
हुङ्कारव्यतिकरिताः खमुत्पतन्तः ।
मूर्धानः श्रितकरिणां धनुर्धराणा
मुत्क्रान्तास्त्वरितमसूनिवाभिजग्मुः ॥ 26

शस्त्रौघत्रुटितमदद्विपाश्वयोधं
वीराणां विमतबले चचार वृन्दम् ।
दंष्ट्राग्रक्रकचविदारितोग्रयादः
पाथोधौ मकरकुलं यथा महीयः ॥ 27

नाराचप्रविदलितात्कपोलभागा
न्नागानां यदुदयति स्म शोणिताम्भः ।
आधूतं श्रवणपुटानिलेन शश्वत्
सम्प्राप्तं तदरुणकर्णचामरत्वम् ॥ 28

उन्मीलन्नरपतिकीर्तिकाशभाजि
प्रारम्भे रणशरदो विजृम्भमाणे ।
रुन्धन्तो गगनपथं गरुन्मरुद्भिः
कादम्बास्सुभटमुखाम्बुजेषु पेतुः ॥ 29

भूपाभ्रैर्जलकणवद्धटान्विसृष्टान्
युद्धाब्धौ प्रहरणशुक्तिषु प्रविष्टान् ।
सम्भ्राभाननिमिषभूयमौक्तिकत्वं
स्वर्नार्यो गुणकलितांस्तनेषु चक्रुः ॥ 30

मुञ्चद्भिर्मुखरहरिन्मुखान्पृषत्कान्
धानुष्कैर्युधि निहता अपि द्विपेन्द्राः ।
तन्मार्गानचलनिभैर्वपुर्भिरग्रे
रुन्धाना विदधुरिवाशु वैरशुद्धिम् ॥ 31

आमूलं सुभटनिषादखण्डितानां
शुण्डाभिर्व्यतिकरमेयुषां गजानाम् ।
कृत्तानां रणभुवि भूभुजां भुजानां
केयूरैस्समजनि केवलं विभेदः ॥ 32

मुक्तानामधिसुभटं सुपर्ववृन्दै
र्मन्दारद्रुमसुमनस्स्रजां रजांसि ।
विच्छेदं सपदि गतस्य शोणितौघैः
सन्धानं विदधुरनीकभूमिरेणोः ॥ 33

बाहिन्थप्रहरणतः परस्परेषां
भग्नेषु स्वकरवृतेषु मुद्गरेषु ।
उत्खातैस्सपदि मिथो विषाणकाण्डै
र्गातेनुः कतिचन हस्तिनस्समीकम् ॥ 34

पादातैरिषुभिरिव स्थितैर्विसृष्टं
मुग्धेन त्रिदशवधूजनेन चक्रम् ।
एकैकं युधि हतवीरभिन्नमध्यं
विभ्रश्यद्दिनकरमण्डलं शशाङ्के ॥ 35

कुम्भभ्यस्सुभटकृपाणपातवेगात्
नागानां मणिनिकराः स्रमुत्पतन्तः ।
तद्भुध्या ध्रुवमुपकण्ठचारिणीनां
वक्षोजेष्वनिमिषयोषितां निपेतुः ॥ 36

विक्षिप्तं नभसि जिघांसया न यावत्
दन्ताभ्यां प्रतिसुभटं प्रतीच्छतीभः ।
तद्धन्धुर्निशितशरेण तावदुग्रा
वापत्य ध्रुवमसिना लुलाव तावत् ॥ 37

एकस्याजनि हृदयङ्गमा प्रयुक्ता
वीरेण प्रणदितरत्नकिङ्किणीका ।
शक्तिः प्राक् तदनु सुराङ्गना नियुक्ता
कामेन प्रणदितमेखलाकलापा ॥ 38

विक्रान्ताभिसरणकेलिसंभ्रमेण
भ्रष्टेषु स्तनसिचयेषु लज्जितानाम् ।
तत्कृत्यं क्षणमलघूनि खेचराणा
मासन्नध्वजपटपल्लवानि तेनुः ॥ 39

निस्त्रिंशक्षननरपालकालखण्डा
न्यादातुं परिपततां विहङ्गमानाम् ।
सङ्ग्रामक्षितितलविप्रकीर्णमारात्
वित्रासभ्रमकरमान्त्रजालमासीत् ॥ 40

स्मेरं मे धृतकुटिलोद्भटभ्रु सख्युः
पुत्रस्य सितकमलच्छवीति कश्चित् ।
दिव्यस्सन्विहगमुखाद्धृतानि वीरः
स्वर्नार्यै दिवि समदर्शयच्छिरांसि ॥ 41

काश्मीरद्रवरुचिशोणितं कपाला
दादाय द्विपरदतूलिकामुखेन ।
कान्ताया रजनिचरः कपोलभित्तौ
रोमाञ्चस्पृशि विलिलेख पत्रभङ्गान् ॥ 42

मज्जन्त्यखिलनभसा पृषत्कवृष्ट्या
संरुद्धोत्पतनसुखैश्च भूरजोभिः ।
शोषस्स्यादिति चकिता इवाजिभूमे
र्वाहिन्यश्चिरमपसस्रुरस्रमय्यः ॥ 43

छिन्नानि श्रवणपुटानि जीर्णपलाशा
न्युत्प्लायोपरि विततानि कुञ्जराणाम् ।
शुण्डाभिस्सरसिजनालसन्निभाभिः
कीलालह्रदमपिबन् पिशाचडिम्भाः ॥ 44

आर्द्रार्द्रा रुधिरकरोत्करेण तन्त्री
वीणायाश्चिरमपरामृशन्निजायाः ।
आमृष्टमदभवाश्रुरातुलोके
र्वीगणां विबुधमुनिर्विहारमार्गान् ॥ 45

इत्यारादभिमुखयोधखड्गधारा
सङ्घट्टज्वलनदलद्रजोऽन्धकारे ।
सङ्ग्रामे निजभुजदण्डचण्डिमानं
प्रारब्ध प्रकटयितुं सरित्कुमारः ॥ 46

निर्भिन्नान्निरवधिकत्वरस्तदीयो
बाणौघः प्रतिसुभटान्मतङ्गजेभ्यः ।
पर्यस्यद्भुजविटपानपातयत् प्राक्
संवर्तश्वसन इव द्रुमान् गिरिभ्यः ॥ 47

प्राक्क्रौञ्चक्षितिधरभेददृष्टसारा
नाराचा भृगुतनयस्य यैर्विभिन्नाः ।
आच्छिन्दन्नचलनिभानिदानीं
तद्बाणास्त इति यदत्र किन्नु चित्रम् ॥ 48

वीराणामपि भयमादधानमारा
दारावं मुहुरतिघोरमुत्सृजद्भिः ।
निर्लूनैररिकरिमूर्धभिः पतद्भि
र्निर्घातैरिव विदधे भुवः प्रकम्पः ॥ 49

दूरस्थेष्वपि पुरतः शरा न यावत्
लक्ष्येषु त्रिदशनदीसुतस्य पेतुः ।
दुर्लक्षभ्रमणविशेषचारुचक्रः
तावत्तानतिपतति स्म तच्छताङ्गः ॥ 50

प्रख्यातं प्रकटयता वरत्वमस्त्वे
ष्वाधत्ते समरमसौ मयैव साधेन ।
इत्येवं विशिखमुचः किरीटिमुख्याः
प्रत्येकं सुचिरममंसत प्रवीराः ॥ 51

संघट्टस्फुरदनलस्फुलिङ्गसङ्ग
प्रेष्ठेषु च्छदपटलेष्वनन्दवेगाः ।
आच्छिन्दन्ननुपतितेषु दष्टपुङ्खा
लक्ष्याणि द्रुतगतयस्तदीयबाणाः ॥ 52

नाकौकःपुरगणिकाविमुक्तनाना-
पुष्पान्तःपरिगलितः परागराशिः ।
त्रिस्रोतस्सुतरथकेतनांशुकस्य
प्रत्यग्रं युधि पटवासचूर्णमासीत् ॥ 53

चापज्याभिहतिहतैककुण्डलाना-
मास्कन्दं विशिखनिकृत्तकन्धराणाम् ।
पर्यस्यन्मकुटभृतां ततामतानीत्
सेनानीर्भुवमयुतेन राजमूर्ध्नाम् ॥ 54

इत्थं नदीवसुरसौ विधाय जन्यं
राजन्यप्रकरतमःप्रभातसूर्यः ।
पर्यस्ते दिनकृति मृडेन पश्चिमाद्रेः
गतेने बहुमहिमा बलापहारम् ॥ 55

सेनानीरिति नव वासराणि कृत्वा
सङ्ग्रामानधिनवमेऽह्नि जाह्नवेयः ।
युद्धाग्रे विहितशिखण्डिना पुरस्तात्
पार्थेन प्रहितशरोत्करेण भेजे ॥ 56

स्त्रीपूर्वं प्रतिभटमङ्गसङ्गात्
सन्त्यक्तायुधमवलोक्य सत्यसन्धम् ।
जिष्णुस्तं तदनु ततान तालकेतुं
नीविद्धं विदलितमर्मभिर्विषादैः ॥ 57

मेदिन्यां हरिसुतसायकैर्धृतात्मा
धाम स्वं प्रयतमनाः प्रयातुकामः ।
भीष्म त्वं व्रज दिवमुत्तरायणादौ
इत्युक्तस्त्रिदशगिरा जहौ न देहम् ॥ 58

यो विक्रमेण भुजयोरगृहीतहेति-
मग्राहयन्मधुरिपुं रणसीम्नि चक्रम् ।
तस्मिन् हते न खलु कौरवसैव सैन्यं
शोकाकुलं बलमभूदपि शात्रवाणाम् ॥ 59

अभीशुभिरधोमुखैरथ परीतबिम्बे रवौ
विडम्बयति सायकैर्धृततनुं सुतं शन्तनोः ।
पतत्यपरवारिधेः पयसि दूरमुक्तारवं
निवेश भुवमाविशन्नृपतिवर्यसैन्यद्वयम् ॥ 60

इत्यगस्त्यपण्डितकृतौ बालभारते महाकाव्ये
चतुर्दशस्सर्गः

# अथ पञ्चदशस्सर्गः

अथ पूर्वमहीभृतोऽपरेद्युः
शिरसो जग्मुषि पूष्णि भूषणत्वम् ।
अभिषिक्तमनीकिनीपतित्वे
गुरुमाचष्ट कुरूद्वहः प्रहृष्टम् ॥ 1

युधि धर्मसुतं हठाद्गृहीतं
भवता द्यूतविधौ विजित्य भूयः ।
अटवीगृहमेधिनं विधास्या-
म्यनुजैस्सार्धमतीव दुःखदीनैः ॥ 2

ध्वनयन् जगदण्डकं स्वरेण
ध्वजिनीनामधिभूर्जगाद भूपम् ।
यदि सन्निहितो न तस्य जिष्णुः
कलयिष्यामि नृप त्वया यदुक्तम् ॥ 3

घनसारमयत्वदर्शितश्री
रथ सद्वृत्ततयाभिनन्दनीयः ।
तिलकत्वमनीकनीमुखस्य
प्रचलत्कर्णविभूषणं विरेजे ॥ 4

उभयोरपि सैन्ययोर्विमर्दे
महति द्रोणभुजोष्मजृम्भणानि ।
विबुधत्वमुपेयुषोऽपि वीरा
नविलोक्याप्सरसां कुलान्यपश्यन् ॥ 5

म्रियमाणरणोत्सवात्किरीटी
गतशङ्कोऽपि गुरोर्विशङ्कमानः ।
तदहः कुरुसैनिकेषु बाणा
नमुचत्पार्श्वभुवं न धर्मसूनोः ॥ 6

शरवर्षभृतं भियेव हित्वा
गगनं भास्वति याति पश्चिमाद्रिम् ।
कलशानलसम्भवौ प्रवीरा
वपहारं बलयोर्वितेनतुस्तौ ॥ 7

अपरेद्युरथ त्रिगर्तनाथो
दधदाज्ञां गुरुचोदितस्य राज्ञः ।
नरमाजुहुवे परत्र योद्धुं
स च नारायणसारथिः प्रतस्थे ॥ 8

उरुसन्नहनाः कुरुप्रवीरा
रहितं गाण्डिवगर्वितेन पुंसा
अविशङ्कमजातशत्रुसैन्यं
गतसिंहं गहनं गजा इवापुः ॥ 9

कुरुपाण्डवसैन्ययोर्दिदृक्षु
र्नरसंशप्तकवर्गयोश्च युद्धम् ।
कलहप्रणयी मुनिः प्रहृष्य
न्नुभयत्रापि गतागतान्वितेने ॥ 10

युधि तत्र युधिष्ठिरं जिघृक्षो
रिषुदण्डाश्च गुरोर्मनोरथाश्च ।
अनिलानलसम्भवादिभिस्ते
विफलत्वं शरदुर्दिनेन नीताः ॥ 11

भगदत्तवशंवदो वितन्व
न्विविधानि भ्रमणानि सुप्रतीकः ।
क्षुभितं द्विषतां बलं द्विपेन्द्रो
विदधे मन्दरवन्महाम्बुराशिम् ॥ 12

चरणैः कतिचित्करेण कांश्चि-
द्दशनाभ्यां कतिचिद्विरोधियोधान् ।
बहुलेन च बृंहितेन कांश्चि
द्धृतमन्युर्नमयाम्बभूव दन्ती ॥ 13

भगदत्तगजेन हन्यमानं
युधि विज्ञाय निजं बलं प्रपेदे ।
पवनास्त्रनिरस्तकृत्तशेष-
प्रतियोधो जविना रथेन पार्थः ॥ 14

दृढपीडितचूलिकेन नुन्न
श्चरणाङ्गुष्ठपुटद्वयेन धर्त्रा ।
निभृतश्रवणं प्रसार्य हस्तं
द्रुतमभ्यद्रवदर्जुनं द्विपेन्द्रः ॥ 15

रथमुत्तरतोऽपवाह्य किञ्चि
द्वितथीकुर्वति कुञ्जरस्य वाञ्छाम् ।
नरकस्य रिपौ तदन्वयेन
प्रहितां पार्थशरश्चकर्त शक्तिम् ॥ 16

स निरङ्कुशमङ्कुशेऽभिमन्त्र्य
ज्वलितं वैष्णवमस्त्रमस्ततन्द्रः ।
प्रजिघाय किरीटिने जिघांसुः
कुलिशं क्रुद्ध इवाचलाय शक्रः ॥ 17

द्रुतमात्तभियापसृत्य दूरं
गगने सिद्धगणेन वीक्षितं तत् ।
शरणागतरक्षणावतीर्णः
प्रतिजग्राह भुजान्तरेण शौरिः ॥ 18

रथवाजिरजोऽङ्गरागभाजि
स्थितमस्योरसि तन्मुहूर्तमात्रम् ।
ददृशे मृदुनानिलेन नुन्नं
शिखरिग्रावणि यथा शिरीषपुष्पम् ॥ 19

विजयप्रहितेन तैक्ष्ण्यभाजा
विशिखेन द्विरदाद्रिभिन्नमूर्ध्नः ।
न्यपतन्मणयः कुमारशक्त्या
दलितात्क्रौञ्चगिरेरिवाशु हंसाः ॥ 20

निपतन्नसुहारिभल्लविद्धो
गजमल्लस्थलमग्नदन्तकुन्तः ।
प्रभुणा नरकात्मजेन सार्धं
प्रविशन् गर्भमिव क्षितेर्बभासे ॥ 21

अपरेण पुनः शरेण कृत्तं
रुधिरोद्गारि रिपोः शिरः कबन्धात् ।
अपतद्भुवि शोणशोचिरद्रे
रपरादप्यधिपस्य बिम्बमह्नाम् ॥ 22

दिवसप्रलयावसानवेशौ
विरतोग्रप्रसरौ जवेन भूयः ।
निजमेव यथापुरप्रदेशं
बलपूर्वापरसागराववयाताम् ॥ 23

शिबिरद्वितये ततः प्रभाते
रणसन्नाहिषु राजकुञ्जरेषु ।
समराय हृतोऽपरत्र भूय
स्त्रिदिवेशस्य सुतस्त्रिगर्तयोधैः ॥ 24

रणसीमनि शूलिनाप्यभेद्यं
विमतव्यूहमुदीक्ष्य दुर्निरीक्षम् ।
अपहाय विलोचनं तु वामं
बलमस्पन्दमलक्षि पाण्डवानाम् ॥ 25

अथ धर्मसुतस्य बिभ्रदाशा
मभिमन्युर्विशिखैस्सहस्रसङ्ख्यैः ।
अभिनत्किरणैरिवोष्णरश्मिः
कमलव्यूहमुदूढबालभावः ॥ 26

विशतोऽस्य धनुर्विनिर्गतानां
तुलितादावलिभिश्शिलीमुखानाम् ।
स्थगयन्दिवमुत्पपात पश्चा
त्कनकक्षोदसहोदरः परागः ॥ 27

तमनुप्रविविक्षु पार्थसैन्यं
पिहितव्यूहमुखेन सिन्धुभर्त्रा ।
हरदत्तवरोद्धतेन सर्वं
सरितः स्रोत इवाचलेन रुद्धम् ॥ 28

पुरुहूतसुतस्य पुत्रताया
यदुनाथस्य च भागिनेयतायाः ।
स विमर्दसहो महारथानां
सदृशं कर्म समाचचार वीरः ॥ 29

अभिमन्युशिलीमुखाभियोगा
त्पततां हेमकिरीटमण्डलानाम् ।
मणिकुण्डलिनां महीशमूर्ध्नां
भरमुद्वोढुमभूदलं न भूमिः ॥ 30

रणरेणुनिवारणार्थमिन्द्र
स्स्वशरीरादपनीय वारवाणम् ।
प्रमदेन दृशां शतैस्सबाष्पै
र्दिवि पौत्रस्य ददर्श पौरुषाणि ॥ 31

शरभग्नरथद्विपः प्रयातः
शरभत्वं प्रतियोधिसिंहयूनाम् ।
सुदृशस्सुरसुभ्रुवां वितेने
सदृशः पुष्पशरस्य साभिलाषाः ॥ 32

युधि लक्ष्मणमात्मसायकानां
प्रथमं पार्थसुतश्चकार लक्ष्यम् ।
दिवि कामविकल्पमार्गणानां
तदनु स्वर्गणिकाविलोचनानाम् ॥ 33

धनुरस्य चकर्त भानुसूनु
र्गुरुरश्वाञ्छरसम्भवश्च सूतम् ।
इषुभिस्तमवाकिरन्प्रवीरं
हृदिकद्रोणसुतौ बृहद्बलश्च ॥ 34

विरथस्स हतस्सखड्गखेटः
सुरचाटूनि खमुत्पपात शृण्वन् ।
कति वा निहता मया प्रवीरा
दिवि सन्तीति दिदृक्षयेव तेषाम् ॥ 35

स नदन्फलकासिपट्टकौ च
भ्रमयन्व्योमनि रेचकानि चक्रे ।
शिततुण्डविखण्डितस्य विभ्र-
त्फणभोगाविव पन्नगस्य तार्क्ष्यः ॥ 36

गुरुकर्णशरक्षतासिचर्मा
भुवमासाद्य गदी गदासहायम् ।
कुरुभूरमणानुजस्य सूनुं
निजघान स्वयमप्यनेन जघ्ने ॥ 37

प्रशमय्य विरोधिनोऽन्धकारा
नभिमन्यौ तरनेऽपि चास्तभाजि ।
हृदयानि च पाण्डुनन्दनाना
मरविन्दानि च मीलितान्यभूवन् ॥ 38

कुरवो दधतश्शरीरमग्ना-
ञ्छरशल्यानभिमन्युनामचिह्नान् ।
प्रययुश्शिबिरं परेऽपि सर्वे
निदधाना हृदयेषु शोकशल्यान् ॥ 39

कवचानि जयद्रथेषुकृत्ता
न्यपनीयोपनतैस्समं नरेन्द्रैः ।
विषसाद विषादलुप्तचेताः
सदसि स्थण्डिल एव धर्मराजः ॥ 40

अवरोधगृहेषु सुन्दरीणां
करुणं क्रन्दितमुल्बणं जजृम्भे ।
शबराहतशावविह्वलानां
कुररीणामिव कूजितं वनेषु ॥ 41

श्रवसि प्रथमं सुतप्रवृत्ति
हृदये शोकमयं ततोऽन्धकारम् ।
अपतद्विवशा स्वयं सुभद्रा
भुवि पश्चात्पवनाहतेव वल्ली ॥ 42

अपसृत्य नरेन्द्रयोषितस्तां
पयसां बिन्दुभिरश्रुवर्षमिश्रैः ।
श्वसितोपचितैश्च लब्धसंज्ञां
तरसातन्वत तालवृन्तवातैः ॥ 43

भुवि केशकलापसंस्कृतायां
विलुठन्ती विललाप वीरपत्नी ।
दधती मृदुशिञ्जितापदेशा
द्विलपन्तीव विभूषणानि गात्रैः ॥ 44

युधि वत्स निपातितोऽसि वीरै
रनवद्यास्तरणां विहाय शय्याम् ।
शरशल्यरुजा वलद्भिरङ्गै
र्भुवि शेषे कथमद्य केवलायाम् ॥ 45

मृदुना व्यजनानिलेन यस्ते
व्यपनेयो रणभूविहारघर्मः ।
असृगासवगृध्नुगृध्रपक्ष
श्वसनेनैव तनोषि तत्प्रशान्तिम् ॥ 46

शरपक्षमरुत्प्रमृष्टशेषा
रणरेणुस्तव पक्ष्मपङ्क्तिलीना ।
परिरभ्य मयेव वन्दनान्ते
परिमृज्येत कयाद्य कौतुकिन्या ॥ 47

पुरतश्चटुलं कुलं शिवानां
वदनोल्कामयदीपिकाशतेन ।
भवतः पुरुषप्रकाण्डसेव्यं
विजयारात्रिकमङ्गलं विधत्ते ॥ 48

तव वारविलासिनीसहस्रै-
र्भरिताभ्यासभुवः पुरा निशासु ।
अधुना रचयन्ति पार्श्वसेवां
पिशितग्रासभृशोद्धताः पिशाच्यः ॥ 49

त्वयि जाग्रति वीर मानिनो ये
भुवि जाता दिनदीपदैन्यभाजः ।
अपदानविकत्थनासु तेषा
मलघुप्रीतिरितःपरं भवित्री ॥ 50

त्वयि दिव्यवधूविलोचनाना
मतिथित्वं विधिना हतेन नीते ।
असपत्नतया वसुन्धरायां
कुसुमास्त्रः कुशली चिराय जातः ॥ 51

कुरुवंशनिधिं बिभर्ति गर्भं
कुशलं मात्स्यमहीभृतः कुमारी ।
असमाप्य च दौहृदान्यमुष्या
न हि युक्ता भवतः परत्र यात्रा ॥ 52

सुतमङ्कनिषण्णमुद्वहन्तं
गिरिशस्येव कपर्दमूढचन्द्रम् ।
अवलोकयितुं भवन्तमेत
त्सुकृतं तादृशमाचरन्नचक्षुः ॥ 53

इति सा विविधं विलप्य मूर्छा
मसकृत्प्राप शुचा जनेन संज्ञाम् ।
कमला शशिनेव हन्त निद्रां
दिवसेनेव विबुद्धतां क्रमेण ॥ 54

स्वसखीविधृता वधूश्च तस्या
रुदती मुग्धतया विना विलापम् ।
अभिचन्नयनोदकेन गर्भं
दृढशोकानलदाहशङ्कयेव ॥ 55

अनिवर्तिनमेव युद्धभूमे
रथ संशप्तकवर्गमारचय्य ।
शिबिरं प्रति शीलवान्निवृत्तः
पथि कंसद्रुहमाह शुभ्रवाहः ॥ 56

अयि शश्वददक्षिणं मदीयं
वहति स्पन्दमिदं मुकुन्द चक्षुः ।
शिबिरं च यथापुरं न भाति
क्षितिपस्याकुशलं भवेदमित्रात् ॥ 57

इति तस्य वचो निशम्य शौरि-
र्विनिगृह्णञ्शुचमन्तराचचक्षे ।
धृतिमान्भव पार्थ सानुजस्य
क्षितिभर्तुः क्षतिरस्ति नैव काचित् ॥ 58

परमन्दिरमूकयोधलोकं
निभृताराात्रिकतूर्यशङ्खघोषम् ।
प्रविवेश कपिध्वजो निवेशं
मथनानन्तरशान्तसिन्धुकल्पम् ॥ 59

स रथादवतीर्य रुद्धबाष्प-
प्रसरैः कञ्चुकिभिः प्रणम्यमानः ।
विमना विशति स राजगेहं
सह लोकत्रयपालकेन यन्त्रा ॥ 60

स ददर्श सदस्युदश्रुधारं
सिचयैरावृतमौलि राजबृन्दम् ।
गिरिचक्रमिवात्तनिर्झरौघं
शरदभ्रैरवगुण्ठितोरुशृङ्गम् ॥ 61

उपसृत्य ततः कृतप्रणामो
नृपतेर्नित्यममुक्तपार्श्वसेवम् ।
अभिमन्युमधीरधीरदृष्ट्वा
विकसन्मन्युरपृच्छदन्तिकस्थान् ॥ 62

अथ नम्रमुखेषु तेषु तस्मै
नृपतिर्गद्गदिताश्रुसन्नकण्ठः ।
भयविस्मयहर्षशोकमोहान्
जनयन्तं तदुदन्तमाचचक्षे ॥ 63

अथ दत्तपदं विजित्य शोकं
हृदये वानरकेतनस्य रोषः ।
उदभूदभिभूय बाडवाग्निं
कलशाब्धेः पयसीव कालकूटः ॥ 64

स्फुरिताधरमश्रुपूरिताक्षं
प्रभवद्वेपथु बिभ्रतं शरीरम् ।
भ्रुकुटेरुदयादमंस्त पूर्वं
भृशमुद्विग्नशुचं जनः प्रवीरम् ॥ 65

प्रसरेण घनेन घर्मवारा
मभिषिक्तो विजयश्रियेव वीरः ।
स्तनितप्रतिरोधिना स्वरेण
प्रतिजज्ञे शतयज्वसूनुरित्थम् ॥ 66

सुभटाः शृणुतोदयन्नयाव
त्पतति श्वो हरिदश्वबिम्बमब्धौ ।
रणसीमनि पातयामि ताव
द्विशिखाग्रेण शिरो जयद्रथस्य ॥ 67

यदि न क्रियते मयैवमाजौ
पुरतः कर्णसखस्य कौरवस्य ।
ज्वलिते सह गाण्डिवेन वह्नौ
शलभत्वं मम लप्स्यते शरीरम् ॥ 68

इति दत्तसुदुस्तरप्रतिज्ञो
विजयः पूरयति स्म देवदत्तम् ।
परिपन्थिकलत्रगर्भपाते
ऽप्यदयं दैत्यरिपुश्च पाञ्चजन्यम् ॥ 69

हृषिताङ्गरुहः प्रहृष्टचेता
बकशत्रुर्विदधे तथाट्टहासम् ।
निपतत्कबलैः क्षणं कराग्रै
र्मुमुहुः स्तम्भगता यथारिनागाः ॥ 70

इतरे मुदिताः स्वसिंहनादै
र्मुखरां भूपतयस्सभां वितेनुः ।
विगमे वनहस्तिनो घनानां
निजकण्ठस्तनितैर्गुहामिवाद्रेः ॥ 71

नुदितं मुखसंज्ञया विभुस्तं
नृपबृन्दं स विसृज्य विश्रमाय ।
नृपतिः प्रविवेश राजगेहं
भयमग्नं च जयद्रथस्य चेतः ॥ 72

दनुजारिरथोचितानुलापा
दनुजायास्सुसहं विधाय दुःखम् ।
भवनन्दितपौरुषस्य पुंसो
भवनं प्राप कृती कृपापयोधिः ॥ 73

स तमाह रुषा कृता किरीटि
न्नविचार्यैव मया सह प्रतिज्ञा ।
गुरुकर्णकृपादयः प्रवीराः
कुरुराजस्य बले न सन्ति किन्ते ॥ 74

चकितो भवतः श्रुतप्रतिज्ञः
शरणं द्रोणमगात्सुवीरनाथः ।
अभयं स च दत्तवानमुष्मै
सह वीरैः कुरुभूमिभर्तुरग्रे ॥ 75

स विहस्य जगाद दृष्टसारै
रलमेभिर्यदुनाथ सिन्धुराजम् ।
अपि दिक्पतिभिर्निहन्मि गुप्तं
ज्वलदस्त्रैर्भवतश्शपे पदाभ्याम् ॥ 76

सकृदाजिषु यस्य पादरेणो
स्स्मरणेन त्रिदशा जयन्ति दैत्यान् ।
त्वयि सन्निहिते सदैव तस्मिन्
मम हस्ते ननु विश्वमेतदास्ते ॥ 77

अथ विश्वमयस्स भूतभर्तुः
परिगृह्यात्मनि कल्पितां सपर्याम् ।
कुशतल्पगतो हरं स्मरेति
प्रभुरादिश्य तमासदत्स्वगेहम् ॥ 78

शयनं शुचि तत्र वासवेश्म-
न्यपरं शेषमिवाधिशय्य शौरिः ।
विजयस्य कृते विगाढचिन्तः
पदसंवाहकरं जगाद सूतम् ॥ 79

अयि दारुक दारुणप्रतिज्ञं
विजयं रक्षितुकाम एष बाहुः ।
कुरु मत्सविधे रथं युधि श्वः
कुरुनाशाय सदिव्यशस्त्रकेतुम् ॥ 80

सुखसुप्तजने ततो निशीथे
सुहृदं पाशुपतास्त्रमुष्टिलब्ध्यै
कुशतल्पगतं करे गृहीत्वा
सहसा शाम्भवमास्पदं प्रतस्थे ॥ 81

स विलङ्घ्य वियत्पथं सुदूरं
गुणमुक्तेषुजवो गुणैरमुक्तः ।
समदर्शयदर्जुनाय तांस्ता
नुडुचक्रभ्रमणोचितान्प्रदेशान् ॥ 82

एकैकदन्तमुसलक्षतिसूच्यमान-
हेरम्बकेलितटघातविधिं प्रपेदे ।
कैलासमिन्दुकिरणद्रवचन्द्रकान्त-
निष्यन्दकन्दलितनिर्झरपातमद्रिम् ॥ 83

**इत्यगस्त्यपण्डितकृतौ[1] बालभारते महाकाव्ये**
**पञ्चदशस्सर्गः**

---

1. A omits पण्डित.

# अथ षोडशस्सर्गः

कृष्णौ ततः क्षितिभृतः शिरसो विभूषां
प्राप्तौ पुरं प्रमथपौरजनेन जुष्टाम् ।
द्वारं विभोरभजतां धृतयामहस्ति
दिव्यत्रिशूलधरभैरवक्लृप्तराज्यम् ॥ 1

तौ नन्दिना द्रुतनिजागमनप्रहृष्टा-
वन्तस्ससम्भ्रममुभावपि नीयमानौ ।
बालातपद्युतिजुषां मणिदीपभासा
मापूरितं विविशतुर्भवनं भवस्य ॥ 2

रोमन्थफेनशबलाग्रभुवा चिराय
स्वापोपलम्भपरिवर्तितकन्धरेण ।
निश्वासभङ्गिभिरनुक्षणमूष्मलाभिः
क्षिप्रोपहारकुसुमेन सनाथमुक्ष्णा ॥ 3

श्लाघ्यं प्रभोरवसरं प्रतिपालयद्भिः
सौधाङ्गणेषु शयितैरुपधाय वीणाः ।
गीतं मुहुः किमपि वासनया रणद्भिः
सम्बाधितं क्वचन सिद्धवधूकदम्बैः ॥ 4

कक्ष्यासु सप्तसु कथंचन लङ्घितासु
ज्योतिर्विशेषकथितात्मनिवासदेशम् ।
देवं जगत्त्रितयरक्षणजागरूकं
कृष्णार्जुनौ ददृशतुर्दमनं पुराणम् ॥ 5

भद्रासने महति सिंहसनाथपादे
गन्धर्वसिद्धसुरसंपदमुक्तपार्श्वे ।
देव्या सह स्फटिकशैल इवापरस्मिन्
निर्णिक्तरत्नरुचिभाजि निषेदिवांसम् ॥ 6

सङ्गीतमर्दलरवश्रवणोपयान्तं
निद्रायमाणमरुणाश्मनि पादपीठे
पादाम्बुजेन गुहवाहनबर्हिशावं
पक्षेषु पल्लवनिभेषु परामृशन्तम् ॥ 7

उत्तंसतामुपगतस्य तुषाररश्मे
रुत्सर्पिभिर्नवमृणालगुणावदातैः ।
आस्थानमण्टपमशेषमभीशुजालै
राबद्धनूतनवितानमिवादधानम् ॥ 8

सिन्दूरधूलिरुचिसिन्धुरवक्त्रमूर्ध्नि
बालातपद्युतिगुहाननपङ्कजेषु ।
शैलात्मजाकुचतटेऽपि च कुङ्कुमाभं
भूषाभुजङ्गफणरत्नमहो वहन्तम् ॥ 9

आवेदितं सविधगेन च नारदेन
श्रुत्वाभिजातमभिमन्युभुजापदानम् ।
सम्भावयन्तमसकृत्परिकम्पितेन
वल्गद्द्युसिन्धुलहरीमुखरेण मूर्ध्ना ॥ 10

आवेदितौ तदनु साञ्जलिबन्धनेन
शैलादिना पशुपतिः प्रणतोत्थितौ तौ ।
आलोकयद्बदरिकाश्रमबद्धवासौ
दिव्यौ मुनी जगति भूतहिताय जातौ ॥ 11

कृष्णाज्ञया च निजकार्यनिवेदनाय
सिंहासनं समुपसर्पति शक्रसूनौ ।
स्मृत्वा चिराय कुहनाशबरौ नियुद्धं
तौ दम्पती स्मितलवाङ्कमुखावभूताम् ॥ 12

बध्वाञ्जलिं कमलकोमलकोरकाभ-
मग्रे स्थितस्स विजयो विजयोर्जितश्रीः ।
आपन्नकल्पतरुणा तरुणामृतांशु
रेखा भृता निजगदे जगदेकवीरः ॥ 13

जानामि पार्थ भवदागमनस्य हेतु-
मस्मिन् सुधारससरस्युपकण्ठभाजि ।
दैत्याहवोत्थमतिखेदमिवापनेतुं
मग्नं धनुस्सशरमानय मत्सकाशम् ॥ 14

जिष्णुस्तथेति कलयन्तरसा शिवाज्ञां
दिव्यं सरस्सह यदुप्रवरेण यातः ।
चापं शरं च नुतिसंहृतभोगिरूप
मादाय पारिषदसंसदमाप भूयः ॥ 15

भ्रूसंज्ञया सदसि कश्चन भूतभर्तु
रुत्थाय कुण्डलितकार्मुकसंहितेषुः ।
प्रादर्शयत्तदनु पाशुपतप्रयोग-
मुष्टिं सहस्रनयनप्रभवाय सम्यक् ॥ 16

आदाय तं मधुरिपुर्विभुना विसृष्टं
प्रत्यागतः कुशमये विनिवेश्य तल्पे ।
शय्यां यथापुरमवाप्य निजां निशान्ते
शुश्राव सूतजनबृन्दसुभाषितानि ॥ 17

उन्मेषवत्युषसि धर्मभुवो निवेशे
जन्यप्रयाणपटहध्वनिरुज्जजृम्भे ।
प्रत्यर्थिनः क्षितिभृतः कटके च तादृक्
तस्य प्रतिध्वनिरिवानुपदं गभीरः ॥ 18

स्नातो नृपः कृतपितृद्विजदेवपूजः
संग्रामभूविहरणोचितवेषचारुः ।
निर्गच्छति स्म भवनादवलोकनेन
सम्भावयन् क्षितिभृदञ्जलिकाननानि ॥ 19

युक्तं शशाङ्करुचिभिस्तुरगैश्चतुर्भिः
संशतकास्रगनुरञ्जितचक्रनेमिम् ।
नृत्यत्कपिध्वजपटं रथमानिनाय
द्वारं सुराधिपसुतस्य रथाङ्गपाणिः ॥ 20

तं हेषमाणतुरगं मघवत्कुमारः
कृतप्रदक्षिणविधिः प्रथमं प्रणम्य ।
यन्तुर्जयेति वदतो मुखमम्बुजाक्षं
पश्यन्प्रमोदविकचाननमारुरोह ॥ 21

प्रग्राहतोदनपरिग्रहकर्कशेन
हस्तद्वयेन हरिणा सहसोपनीतम् ।
रोमाञ्चकञ्चुकिषु वर्म कथञ्चिदङ्गे
ष्वामुञ्चदासुरशरक्षतपूर्वभागम् ॥ 22

वल्मीकतामुपगतामिषुपन्नगानां
कर्तुं निषङ्गयुगलीमपराङ्गभूषाम् ।
तस्यातिवीरविशिखोल्लिखितैकदेशं
मूर्ध्ना धृतं मुकुटमेव शिरस्त्रमासीत् ॥ 23

क्रीडाकिरातवपुषः पुरशासनस्य-
चूडातुषारकरखण्डसुधासुगन्धि ।
वैधव्यदायि विबुधद्विषदङ्गनाना
मादाय कार्मुकमधिज्यमसावकार्षीत् ॥ **24**

व्यूहं द्विषामभियता तनयेन जिष्णो
रास्फालितस्य धनुषो दिवि जृम्भमाणः ।
विस्फार एव भवति स्म सुराङ्गनानां
वीरस्वयंवरणमङ्गलतूर्यघोषः ॥ 25

व्यूहस्य विश्रुतमहारथरक्षितस्य
द्वारस्थिताय गुरवे युधि दुर्जयाय ।
पार्थश्चकार मुरशासनशासनेन
पादान्तिकप्रहितबाणयुगप्रणामम् ॥ 26

द्रोणस्तु रोषकृतदुस्तरसन्धमेनं
संरक्षितुं गुणनिधिः प्रियशिष्यमिच्छन् ।
उद्यत्प्रसादवदनप्रकटानुकूल्य
कृप्ताहवः क्षणमनेन जितः किलासीत् ॥ 27

तं दक्षिणेन परिहृत्य गुरुं महीध्रं
विज्ञातदैवमरुदप्रतिकूलभावः ।
व्यूहो दधौ द्रुततरं रथयानपात्र
मन्तर्निनाय यदुनायककर्णधारः ॥ 28

व्यूहं बिभेद रथवेगवशेन शौरिः
पार्थेषुभिर्बिभिदिरे कृतवर्मसैन्याः ।
श्रुत्वा चमूकलकलं बहुलं तदानीं
दुर्योधनस्य हृदयं च भयेन भिन्नम् ॥ 29

शौण्डीर्ययौवनमदे शमिते शरौघै
वृद्धत्वजर्झरतनुं धृतकेतुयष्टिम् ।
निर्माय मोहतिमिरान्धदृशं च भोजं
पार्थो जगाम युधि काल इव द्वितीयः ॥ 30

आगत्य सम्मुखमुदञ्चितबाहुसारा
नासादितानमरभावममुष्य बाणैः ।
प्रत्येकमेव रणसीमनि तत्र नूनं
वीरान् शतंशतमगृह्णत नाकनार्यः ॥ 31

अप्यर्जुनेषुदलितारिकुलाकुलायां
वेगोत्तरां रथगतिं युधि वीक्ष्य शौरिः ।
सञ्चारिणो गगनवर्त्मनि निर्विबन्धे
पत्युर्जवं च पततां च तिरश्चकार ॥ 32

स्पर्धाजुषाविव मिथः प्रथितात्मकृत्यौ
पत्रोज्ज्वलेन जवनिर्जितमारुतेन ।
कृष्णौ रथेन च शरप्रकरेण चोभौ
सैन्याङ्गतोदमतिदारुणमादधाते ॥ 33

तं व्यूहमध्यगतमुग्रतरैर्मयूखै
र्मध्याह्नभानुमिव सर्वसरस्वदम्भः ।
बाणैरशेषरिपुजीवितमाहरन्तं
द्रष्टुं प्रभूतमहसं न शशाक लोकः ॥ 34

अश्वाञ्छशंस तृषितान्विजयाय शौरि
रस्त्रेण केन चिदसावपि गां विभिद्य ।
मूर्तं यशस्स्वमिव दैत्यजयार्जितं त
त्पातालतस्समुदपादयदच्छमम्भः ॥ 35

तस्यार्धमेव सरसः परितो विशाल
मुच्छ्रायशालिशरकूटमधो विधाय ।
विस्मापिते दिवि भुवि स्थितिभाजि लोके
वीरेण तेन पदगेन तदा बभूवे ॥ 36

तस्मिन्पतन्ति विवधायुधशिञ्जि राज्ञां
बृन्दानि बाधयति निर्दयमद्वितीये ।
स्मृत्वा रघूद्वहखरादिनिशाचराणां
धुर्यान्मुमोच मुदितस्तुरगान्मुकुन्दः ॥ 37

काम्बोजभोजयवनाङ्गकलिङ्गवङ्ग-
नेपालमालवमुखक्षितिपाङ्कभाजम् ।
उत्खाय मार्गणगणं निजपाणिपद्म-
स्पर्शाहृतव्रणरुजो विदधे स वाहान् ॥ 38

कृत्वा ततो विलुठनानि यथेष्टमुर्व्या
मुत्थाय पांसुलसटान्धुवतः स्वकण्ठान् ।
पाणिद्वयेन मृदितावयवान्क्रमेण
रथ्यानपाययत वारि रथाङ्गपाणिः ॥ 39

स्नातोत्थितैर्मधुरहेषितवद्भिरश्वै
र्युक्तं यथापुरमधिष्ठितमर्जुनेन ।
सञ्चारयन्युधि रथं मधुमर्दनोऽभू
न्मन्दारवर्षशरवर्षकृताभिषेकः ॥ 40

जिष्णोः प्रवृत्तिमरिमध्यगतस्य राज्ञा
जिज्ञासुना समिति सप्रणयं नियुक्तौ ।
भीमश्च सात्यकिसुतश्च गुरुं विजित्य
व्यूहं द्विषामविशतां रथिनौ रयेण ॥ 41

बाणैर्बभञ्जतुरुभौ हरिनन्दनेन
लूनावशिष्टमखिलं च बलं रिपूणाम् ।
वर्षासु सिन्धुरयपातितशेषमारा
द्वन्यद्रिपाविव तलद्रुमषण्डमुग्रौ ॥ 42

दुश्शासनानुजशिरांसि सरोजलाव
मग्रे लुनानमतिदारुणमङ्गराजः ।
भूयिष्ठरोषकलुषः पवमानसूनुं
भूरिश्रवाश्च युधि सात्यकिमभ्ययाताम् ॥ **43**

हित्वा हताश्वमपरं रथमेत्य सज्जं
भीमं व्यधाद्रविसुतो विरथं विचापम् ।
भीमस्ततोऽयमपसृत्य गदी गजेन्द्रा
नन्यत्र वायुरिव वारिधरान्बभञ्ज ॥ **44**

कृष्णानुजं कृतमहासमरं चिराय
कृत्ताश्वसारथिशरासनमात्तचक्रम् ।
भूरिश्रवा भुजबलेन निपात्य भूमा
वुत्थाय खड्गमुदयुङ्क्त रुषाभिहन्तुम् ॥ 45

कृष्णेन दर्शितमुदग्रकृपाणयष्टि
दंष्ट्रोभयं करममुष्य भुजोरगेन्द्रम् ।
दूरे नरेण युधि योधयता नरेन्द्रा
न्मुक्तश्चकर्त चतुरं दिवि पक्षिवर्यः ॥ 46

अन्यत्र कृतसमितेर्विजय त्वया मे
कृत्तो भुजस्तव यशो धिगिति ब्रुवाणः ।
आचान्तवारिरथ संश्रितदर्भशय्यः
प्रायोपवेशनरतोऽजनि सौमदत्तिः ॥ 47

आघ्राय कालभुजगेन तथा विभक्त
मादाय मारुतिरमुं यदुराजपुत्रम् ।
आरुह्य तेन सह दारुकनीयमानं
यानं सुतस्य सविधं प्रययौ मघोनः ॥ 48

सेनाटवीं विविधराजमहीध्रदुर्गां
पार्थः कथंचन विलंघ्य ततस्सतर्षः ।
वीरप्रकाण्डमयपादपषण्डगुप्तं
सर्वत्र तोयमिव सैन्धवमन्वियेष ॥ 49

अस्ताद्रिमूर्ध्नि पतयालु सुदर्शनेन
स्वर्भानुनेव मिहिरस्य पिधाय बिम्बम् ।
वीरैः कृपप्रभृतिभिस्सह युध्यमान
मादिक्षदर्जुनममित्रवधाय शौरिः ॥ 50

अस्तंगतो रविरभूद्वितथप्रतिज्ञः
बीभत्सुरित्यरिभटेषु वदत्सु रोषात् ।
भास्वन्निरीक्षणसमुन्नमितं प्रवीरः
सौवीरभर्तुरलुनाद्विशिखेन शीर्षम् ॥ 51

सञ्चोदितेन हरिणा तनयेन जिष्णो
रस्त्रेण तन्नभसि पाशुपतेन नुन्नम् ।
छेदादधिक्षरितशोणितमेव शत्रोः
सन्ध्याञ्जलौ पितुरमुष्य शिरः पपात ॥ 52

सद्यः किमेतदिति सोऽपि जुगुप्समान
स्तत्पातयन्भुवि पपात विशीर्णमूर्धा ।
यः पातयिष्यति मदात्मजशीर्षमुर्व्यां
शीर्यच्छिरस्स भवितेति हराद्वरासद्या ॥ 53

पूर्वं पपात भुवि सिन्धुपतेः कबन्धं
पश्चान्नभः परिसरान्वनसिन्धुताम्रम् ।
अस्ताचलस्य विजयस्य च मूर्ध्नि तुल्यं
बिम्बं रवेर्दिविषदामपि पुष्पवर्षम् ॥ 54

शङ्खध्वनेः प्रथममेव सुरेन्द्रसूनो
राशा दशापि च यशःप्रसरः प्रपेदे ।
प्रागेव चेतसि रुषः कुरुभूमिभर्तु
रुत्सेकभाजि विललास पुनर्युयुत्सा ॥ 55

उद्युक्तपाण्डुधृतराष्ट्रभुवा भयेन
सैन्येन सैनिकमितः कलिताभयेन ।
भूयः प्रवृत्तमिभपातनतावनीकं
क्ष्वेलारवैर्गहनतां प्रययावनीकम् ॥ 56

आयोधनाङ्गणतलं द्विरदैः पतद्भि
राच्छादितं क्षतजकर्दमदिग्धदेहैः ।
तेषां च कुम्भमणिभिश्छुरितं बभासे
सन्ध्याभ्रशारमिव तारकितं विहायः ॥ 57

पक्षानिलेन पटुना मुखराऽपराशे
सञ्चारमम्बरतले चिरमाचरद्भिः ।
बाणैः पतद्भिरथ भूमिभृतां शिरोभि
र्लीनैरभावि रथकेतुवनान्तराले ॥ 58

विच्छायतामतितरां व्रजता क्रमेण
वीराननाब्जनिकरेण निरन्तराणाम् ।
भिन्नैरलक्ष्यत रथाङ्गयुगैर्लुठद्भि
स्संबाधिता सविधभूरसृगापगानाम् ॥ 59

शुण्डावतां मुखपटभ्रममादधानः
    शूराग्रतो यवनिकानुकृतिं वितन्वन् ।
हस्तप्रदीपरुचिषु क्वचिदप्रगल्भः
    संयद्भुवि प्रसरति स्म नवोऽन्धकारः ॥ 60

शुण्डाग्रवेष्टनविधौ विदितद्विपेन्द्रे
    तत्तत्क्षतानुमितशस्त्रमणे तमिस्रे ।
अज्ञायि नेत्रकलुषीकरणेन सैन्यै
    रुद्यन्ननुक्षणमनीकभुवः परागः ॥ 61

नीचोन्नतक्रममुषा तमसा घनेन
    दूरीकृतस्वपरवर्गविभेदबुद्धिम् ।
भूतिं जनः क्षणमिव क्षणदामवाप्य
    स्वच्छन्दवृत्तिरचिरेण घटोत्कचोऽभूत् ॥ 62

मायातिरोहितवपुर्गगनं विगाह्य
    प्रौढाट्टहासरवमेदुरसिंहनादः ।
विद्वेषिणां विकिरति स्म बले बलीया
    नुत्पातवारिद इवोपलवृष्टिमुग्राम् ॥ 63

उन्मीलितं विकटशाखमनोकहानां
    जालं किरन्समिति जातु स यातुधानः ।
चक्रे भयाकुलभटं द्विषतामनीकं
    संवर्तवात इव सागरमाकुलोर्मिम् ॥ 64

कर्णस्ततः कुरुपतेस्सुहृदो निदेशात्
    कर्णान्तकृष्टगुणजृम्भितकालपृष्ठः ।
अक्षौहिणीरलघुभिश्शरतोरणीभि
    र्घ्नन्तं घटोत्कचमभिद्रवति स्म वीरः ॥ 65

मायाविनं स बहुधा युधि योधयित्वा
शक्त्या ततश्शतमखार्पितया महत्या ।
वक्षस्तटे महति पातितया ससत्त्वं
क्रौञ्चं कुमार इव भीमसुतं बिभेद ॥ 66

सा बिभ्रती चमरवालमसक्तरक्तं
निष्क्रामति स्म वपुषो विमतस्य भिन्नात् ।
प्रायस्तया सह जवाद्धतमत्सरेण
प्राणानिलेन निरगामि तथैव सद्यः ॥ 67

सा किङ्किणीरवमिषेण नभश्चरेभ्यः
प्रीत्येव पार्थमहतं विनिवेदयन्ती ।
क्रव्यादपादपममुं भुवि पातयित्वा
वेगादगादशनिवत्पुनरिन्द्रपार्श्वम् ॥ 68

शोचत्सु पाण्डुतनयेषु सुते हतेऽस्मि
ञ्छौरिर्निजं समिति पूरयति स्म शङ्खम् ।
पृष्टश्च तैः किमिदमित्यवगाढदुःखै
राचष्ट वाचमथ हर्षजलाकुलाक्षः ॥ 69

अस्त्रं यदर्जुनवधाय सुरेन्द्रदत्तं
शल्यं विषाक्तमिव चेतसि नो विषक्तम् ।
दिष्ट्या तदद्य दिननाथसुतेन मुक्तं
हत्वा घटोत्कचमवाप यथापुरं स्वम् ॥ 70

तेनाधुना रहितमस्तमयूखमर्कं
शान्तार्चिषं शिखिनमात्तनखं मृगेन्द्रम् ।
आमूलभग्नरदनं मदगन्धनाग
मुत्खातदंष्ट्रमुरगं कलयामि कर्णम् ॥ 71

शौरेरहारि वचसा मृदुशीतलेन
तेषां कृतस्थितिरसौ हृदि पुत्रशोकः ।
प्राच्यो गिरेरुदयता शशिमण्डलेन
स्त्यानस्तदा जगति नैश इवान्धकारः ॥ 72

सञ्छिद्य सर्वमपि शार्वरमन्धकारं
शस्त्रप्रहारचकिता इव चन्द्रपादाः ।
नाराचदुर्दिनभवं नभसः प्रदेशे
नालं बभूवुरिह नाशयितुं तमिस्रम् ॥ 73

सञ्चारिका इव तदा द्रुपदं विराटं
द्वावप्यमू विषमसायकविह्वलाङ्गौ ।
संप्रेषितास्सरभसं गुरुणाऽऽदरेण
स्वस्सुन्दरीभिरिषवोघटयाम्बभूवुः ॥ 74

स्वैरं नवासु नरशोणितदीर्धिकासु
स्नातोत्थिताभिरिभचर्ममयांशुकाभिः ।
पूर्णे हितैः प्रियतमैस्सह पूतनाभिः
प्रारम्भि नूतनवपासवपानगोष्ठी ॥ 75

श्रान्ति रणोद्धतविमर्दभुवं गतेन
वक्षस्सुरोपिततनूर्वहतासिपुत्रीः ।
भेजे निमीलितदृशा शरतल्पगेन
द्राघीयसी नृपकुमारगणेन निद्रा ॥ 76

उद्वेलवैरदृढबद्धरुषां बलानां
रात्रिः क्रमेण विरतिं प्रययौ न संयत् ।
राज्ञां निरीक्ष्य निधनं निजवंशजानां
विच्छायतामुपजगाम शुचेव चन्द्रः ॥ 77

दन्तक्षतैश्च करिणां नखरव्रणैश्च
वीरश्रिया विरचितैरिव भोगचिह्नैः ।
सम्भाविता नवयवाङ्कुतिनो विभाते
वीरा विलोक्य युधि विस्मयिनो बभूवुः ॥ 78

वर्माणि शस्त्रलुठितान्यवमुच्य गात्रे
ष्वामुञ्चतामभिनवानि चमूचराणाम् ।
यद्वा विलम्बनमभूत्प्रतिवीरवर्यैः
तत्कैश्चिदच्छिदुरयत्नपरैर्न सेहे ॥ 79

व्यापारिताः प्रतिभटावयवेषु योधै
र्ये हस्तलाघववशाद्विषक्तरक्ताः ।
ते दिग्धमूर्तय इव क्षतजेन रेजु
र्बालातपप्रसरकिञ्चिच्छुरिताः कृपाणाः ॥ 80

पाञ्चालमात्स्ययदुनायकसौमुकानां
वीरायितानि विविधानि पुरौ बभूवुः ।
आसारतामपि वहन्ति वलाहकानां
सेरम्मदे शिखिनि किन्तु पयांसि कुर्युः ॥ 81

क्रुद्धेन तेन तदहश्शरताडितेषु
वीरेषु दिव्यतनुषु प्रचुरादसाभ्यः ।
प्रायस्सुपर्वतरवोऽपि सुराङ्गनाभ्यः
क्लान्तिं ययुर्वरणमाल्यसमर्पणेन ॥ 82

स्वैरं युगव्युपरतौ दहतस्त्रिलोकीं
कालानलस्य तुलया परिचुम्ब्यमाने ।
द्रोणे विशृङ्खलगतावतिवेलमाशां
प्राणेषु पाण्डुतनया विजहुर्जनेषु ॥ 83

पवनतनयेनाश्वत्थाम्नस्सनाम्नि हते द्विपे
चकितमनसा द्रोणादभ्यर्थितो मुरवैरिणा ।
पतति समिताविश्वत्थामा हतः परवारणः
स्फुटमिति गिरं राजा धर्मात्मजस्स्वयमब्रवीत् ॥ 84

स सत्यवचसो गुरुर्गिरमजातशत्रोस्तदा
निशम्य सुतवत्सलस्सपदि हा सुतेति ब्रुवन् ।
विसृज्य सशरं धनुः प्रबलशोकमुह्यन्मनाः
रथोपरि निषेदिवानभवदश्रुधौताननः ॥ 85

धृष्टद्युम्नेन सद्यस्समुपगतवता वाहिनीशस्य रोषा
दुन्मुक्तप्राणवायोः करकलितकचेनासिना मूर्ध्नि कृत्ते ।
सङ्क्षुब्धे सैन्यसिन्धौ श्रुतपितृनिधनः क्ष्मामपाञ्चालकृष्णां
कर्तुं निष्पाण्डवां च व्यसृजदरिबले द्रौणिराग्नेयमस्त्रम् ॥ 86

दग्धैकाक्षौहिणीके ज्वलितदशदिशा पार्थमुक्तेन तस्मिन्
ब्रह्मास्त्रेण प्रशान्ते सपदि गुरुसुतं रोषसंन्यस्तशस्त्रम् ।
व्योम्नः कृप्तावतारस्तरलतरजटाविद्युदुद्योतदीप्ता
द्व्यासः कान्तारवासव्यवसितमुचितैर्वारयामास वाक्यैः । 87

पुनरपि समराय व्यापृतं तं निवार्य
स्वमतिचिरसमीकक्लान्तमादाय सैन्यम् ।
नृपतिरथ निकेतं प्राविशत्सप्रकाशः
पतिरपि दिवसानां पश्चिमं वारिराशिम् ॥ 88

इत्यगस्त्यपण्डितकृतौ[1] बालभारते महाकाव्ये
षोडशस्सर्गः

1. A omits पण्डित.

# अथ सप्तदशस्सर्गः

अथ गुरुतनयाज्ञया परेद्यु
मुदितमनाः पृतनाधिनाथभावे ।
शुचिभिरभिषिषेच धार्तराष्ट्र
स्त्पनसुतं तपनीयकुम्भतोयैः ॥ 1

अरिबलहननेन भानुसूनु
र्भरमवनेर्लघयिष्यतीति वार्ताम् ।
गदितुमिव हरिन्मतङ्गजेभ्य
स्समरमृदङ्गरवो दिशः प्रपेदे ॥ 2

वदति जयजयेति राज्ञि कर्ण
स्तदनुजधारितचामरातपत्रः ।
रथवरमधिरुह्य सञ्चचाल
क्षणकृतसन्नहनैर्बलैस्समेतः ॥ 3

किमपि कुरुचमूरनेन शोभा
मभजत हारलतेव नायकेन ।
रुचिरिव शुचिना निदाघरश्मे
र्द्रुतमतिदुस्सहतामगात्परेषाम् ॥ 4

यमवरुणनिभौ वरूथिनीशौ
यमकुरुतां दशपञ्चवासराणि ।
रिपुबलवधमेक एव युद्धे
तदधिकमह्नि चकार तत्र कर्णः ॥ 5

तपनतनयचोदितोऽपरेद्यु
र्बलयुगले रणभूमिभाजि भूपः ।
विजयनिधनमिच्छतोऽङ्गभर्तु
र्भव युधि सारथिरित्युवाच शल्यम् ॥ 6

स तु नृपमवदत्सरोषकम्पः
कुरुवर मामभिजातवंशजातम् ।
कथमिव सकलाभिनन्द्यसारं
कलयितुमिच्छसि सूतपुत्रसूतम् ॥ 7

अहमवमतये ध्रुवं प्रयत्ना
त्पथि कृतसत्कृतिना त्वयोपनीतः ।
न तु भवदहितप्रवासनार्थे
त्युदितगिरं तमुवाच धार्तराष्ट्रः ॥ 8

मम सुहृदमवेहि देवपुत्रं
महति महारथलक्षणोपपन्नम् ।
न भवति रथकारवंशजोऽयं
शुचि किमु शङ्खनखादुदेति रत्नम् ॥ 9

अयमतिरथसम्भवो यदि स्या
त्किमुपदिशेद्भृगुसूनुरस्त्रमस्मै ।
दनुसुतदमनाय शक्रदत्तं
धनुरपि किन्नु ददाति कालपृष्ठम् ॥ 10

तदतिशयितविक्रमस्य पार्था
त्प्रहसितगाण्डिवसारकार्मुकस्य ।
नरकजिदधिकं भवन्तमस्य
त्वरयति सारथिकर्मणे मनो मे ॥ 11

सरसिजभववत्पुरा पुरारे
        र्भवति नियन्तरि मामकस्य सख्युः ।
प्रकटयितुमलं न शौर्यमग्रे
        हरिरपि किं पुनरात्मजस्तदीयः ॥ 12

समुदितहृदयो जगाद राजं-
        स्त्वदनुनयेन करोमि सूतकृत्यम् ।
यदहितमभिधीयते मयाऽऽजौ
        तदखिलमङ्गनृपेण मर्षणीयम् ॥ 13

अथ विजयवधोत्सुकस्तदीयां
        गिरमुररीकृतवांस्तथेति कर्णः ।
प्रवहण मचिरेण तस्य तेजो-
        हननविधौ विहितादरश्च शल्यः ॥ 14

रथमहिमकरात्मजस्य दृष्ट्वा
        रणभुवि मद्रमहीशचोदिताश्वम् ।
कुरुभिरधरवल्गदङ्गुलीकैः
        प्रमुदितवद्भिरकारि सिंहनादः ॥ 15

ध्वजपटपवनावधूतपांसु
        स्थगितमवेक्ष्य....पार्थसैन्यम् ।
दिवसकरसुतेन कार्मुकज्या
        मभिमृशता जगदे स मद्रराजः ॥ 16

प्रथितबहुमहारथे रणेऽस्मि
        न्सपदि रथं नय सूत यत्र कृष्णौ ।
अभिभवति विहाय पुष्पवन्तौ
        ग्रहमपरं किमु सिंहिकाकुमारः ॥ 17

इह रणभुवि यः प्रदर्शयेन्मे
बलगहनान्तरितं प्लवङ्गकेतुम् ।
सहकरितुरगं सकोशमस्मै
सकलमहं वितरेयमङ्गराज्यम् ॥ 18

नरकमथनसारथिर्मदीयं
नयनपथं यदि याति पाण्डुसूनुः ।
तमिव विषधरामिषं विदध्या
मपि परिरक्षितमन्तकेन साक्षात् ॥ 19

अथ तमुपहसन्नुवाच शल्यो
नियतमसि स्वपरान्तरानभिज्ञः ।
त्वमतिरथसुतः क्व फल्गुसारः
क्व च सुरपुङ्गवसूनुरेकवीरः ॥ 20

द्रुपददुहितृशुल्कतां प्रयातं
पुलकितदोर्युगलेन तेन पुंसा ।
विनमितमवच्छरासनं त
त्सहशिरसा ननु मञ्चवर्तिनां नः ॥ 21

क इव विजयमन्तरेण वीरः
कबलितखाण्डवकाननं कृशानुम् ।
इह हि जगति निर्वृतिं विना यः
त्रिदशपतेश्च युधि प्रतापवह्निम् ॥ 22

तव तु भृगुसुतो गुरुस्तदीयो
गुरुरभवत्त्रिजगत्पतिर्गिरीशः ।
निजमदिशदुदग्रमस्त्रमस्मै
पटुतरगाण्डिवताडनप्रहृष्टः ॥ 23

रणधरणितलात्पलायिते प्रा-
क्त्वयि रभसेन निबध्य नीयमानम् ।
तव सुहृदमुदूढयुद्धकेलि
स्स खलु विमोचयति स्म चित्रसेनात् ॥ 24

स्वपनकरतदस्त्रलब्धमोहै
स्सह कुरुभिस्त्वयि मुक्तशस्त्रपाणौ ।
स्वपिति नियतमुत्तराजिभूमा
वधिषत यामिकतां शिवा रसत्यः ॥ 25

मणिपिटकगतं दिने दिने यं
भुजगवरं कुसुमाङ्गरागभोज्यैः ।
परिचरसि वधार्थमिन्द्रसूनो
स्स च विघसः खलु तस्य सायकानाम् ॥ 26

अयमवनमितः प्रतीपवातैः
पिशुनयतीव निवर्तनं ध्वजस्ते ।
दधति दृशममी च साश्रुमश्वा
स्तव भवितैव तदर्जुनेन भङ्गः ॥ 27

गलति हृदयतो न यावदस्त्रं
तव विजयाङ्कितकङ्कपत्रभिन्नात् ।
धृतिरपि महती गलिष्यति द्रा-
ङ्निशमितगाण्डिवनिस्वनस्य तावत् ॥ 28

तदतिभुजबलोष्मणा न शक्य
स्सिततुरगेण विधातुमाहवस्ते ।
किमभिभवति जम्बुको मृगेन्द्रं
मदकरिणं मशकस्तमश्च तेजः ॥ 29

इति परुषगिरं निरीक्ष्य शल्यं
समयवशादपमन्युरङ्गराजः ।
अलमिह वचसाद्य सूत जिष्णो-
र्मम च बलं कलयिष्यसीत्यवोचत् ॥ 30

अथ युधि बलयोर्विजृम्भितायां
स खलु रथी विशिखैरतीतसंख्यैः ।
अभिनदलघु राजकस्य सत्त्वं
वसुभिरिवार्थिजनस्य दुर्गतत्वम् ॥ 31

तदनु विजितवीरकुञ्जरस्य
क्षतजपयांसि चिराय पातुमिच्छोः ।
ह्रद इव पवनात्मजस्य दिष्ट्या
द्विषदनुजो विषयं दृशोर्जगाहे ॥ 32

द्रुपद दुहितृवेणिबन्धमोक्षं
पिशुनयति प्रधनोत्सवे प्रवृत्ते ।
रथगिरिशिखरादवप्लुतोऽसौ
हरिरिव रङ्कुमरिं हठादगृह्णात् ॥ 33

दृढतरभुजयन्त्रमध्यभाजं
द्विषमवलोक्य जगाद भीमसेनः ।
अतिथिरसि चिरान्मदीयबाह्वो
रिह किमितःपरमाचरिष्यसीति ॥ 34

स रिपुरमुमभाषतातिवीरः
कथयसि सम्प्रति निस्त्रपः किमेवम् ।
अभिभवति मयि प्रियां त्वदीयां
सदसि न किं भवता स्थितं तदानीम् ॥ 35

रणभुवि विमतान्निरस्य सर्वा-
न्भुवमवतो नृपमौलिलालिताङ्घ्रेः ।
अभिमुखनिहतद्विषोऽस्तभीते-
र्युधि निधनं विजयाद्वरं हि पुंसः ॥ 36

इति निगदितवन्तमेनमुच्चै
स्समरभुवि प्रहसन्निपात्य भीमः ।
नरहरिरिव दानवं नखाग्रै
रुरसि विदारयति स्म धार्तराष्ट्रम् ॥ 37

शमयितुमिव संभृतं चिराय
ज्वलनममर्षमयं ज्वलन्तमन्तः ।
रिपुरुधिरजलं सुतेन वायो
रसकृदपीयत पाणिसंपुटेन ॥ 38

रस इव भुजगेन्द्रसद्मपीतः
स्वदत इति क्षतजं द्विषः प्रशंसन् ।
सभयमपसरद्भिरालुलोके
युधि कटपूतनभूतयातुधानैः ॥ 39

हतरिपुरुधिराततांङ्गचर्चा
परिचयताम्रवपुस्सवीरवर्यः ।
कुरुकुलविजयोद्यतेन रेजे
बहिरिव रोषकृशानुनोपगूढः ॥ 40

रुधिरमधुमदारुणाक्षमेनं
मदकरिणो गदया विदारयन्तम् ।
नभसि दिविषदां सविस्मयानां
परिषदमन्यत वीरभद्रमन्यम् ॥ 41

तदनु मृदितसर्ववीरगर्वं
विजयहतं वृषसेनमाजिभूमौ ।
अहमहमिकया शिवा व्यलुम्पं-
स्सुरवनिता अपि रक्तदोहदिन्यः ॥ 42

निजसुतहननेन रोषभाजि
प्रचलति संमुखमर्जुनस्य कर्णे ।
स बलकलकलो ययौ यदोर्ध्वं
दिवि मिलितं द्युसदां तदा विमानैः ॥ 43

सकुतुकरणदेवताकटाक्ष-
व्यतिकरितेषु परम्पराकरालम् ।
ध्वनितविजयशङ्खयोरुदग्रं
हरिसुतयोरुभयोरभूदनीकम् ॥ 44

गगनमपि हि तं तदा पृषत्कै-
र्वलयितगाण्डिवकालपृष्ठपातैः ।
अलभत स यथा रवं वितन्व-
न्नपि निजपक्षसमीरणावकाशम् ॥ 45

झटिति निजविलोकनागताना-
मभिलषितान्यनिमेषसुन्दरीणाम् ।
विस्मरशरदुर्दिनावृताभ्यां
विजघटिरे हरिशल्यसारथिभ्याम् ॥ 46

सितनुरगममर्षवर्धनाय
स्मरयति पूर्वकृतान्बहून्निकारान् ।
मधुभिदि सरुषा सुतेन भानो-
र्विचकरिरे कतिचित्पृषत्कवर्याः ॥ 47

विशिखशकलितं विसृज्य वर्म
प्रतिकलमन्यदुभौ समुद्वहन्तौ ।
मुहुरुदवहतां मुखैर्व्रणानां
वपुषि रुषोन्तरदित्सयेव रक्तम् ॥ 48

तिमिरमिहिरवह्निवारिवाह-
द्विपहरिपन्नगवैनतेयरूपैः ।
हरितहयसुतौ महद्भिरस्त्रै
रतिचिरमाहवकेलिमादधाते ॥ 49

अनियतजयभङ्गमात्तजन्यौ
मुहुरभजच्च जहौ च तौ जयश्रीः ।
उभयत एव गतौ सरोजषण्डौ
ह्रद इव हंसवधूः श्रितोर्मिडोला ॥ 50

इममहिमकरात्मजो हनिष्य-
त्यमुममराधिपनन्दनो मिथस्तौ ।
इति वियति गिरो नभश्चराणां
रणमुभयोरपि पश्यतामभूवन् ॥ 51

रणमरणमिषादभिप्रवीरै-
स्सह चिरविस्मृतमण्डलावभेदैः ।
निजसुतभुजचेष्टितानि पश्यन्
न रविरबोधि रथं नभोवतीर्णम् ॥ 52

तदनु धनुषि सूनुरुष्णभानो-
श्चिरधृतशक्रसुतासुपानतृष्णम् ।
समधित गरलाग्निधूमरेखा
निभरसनायुगभीषणं भुजङ्गम् ॥ 53

विम्रमरविषवह्निकीलजाल
द्विगुणितमौलिमणिद्युतिप्ररोहे ।
ज्वलति शमनदण्डधाम्नि तस्मिन्
खमखिलमाकुललेखलोकमासीत् ॥ 54

प्रहतविजयतूर्यघोषभिन्नं
कुरुषु तदा रचयत्सु सिंहनादम् ।
सितहयसुतकामुना हतोसी-
त्युरगमयं शरमुत्ससर्ज कर्णः ॥ 55

वियति तमवलोक्य वृष्णिवर्यो-
विजयशिरोहरणार्थमापतन्तम् ।
अतनुत शरणागतैकबन्धु-
र्भुवि रथमाक्रमणेन मग्नचक्रम् ॥ 56

अहरदथ भिया सहामराणां
मकुटमहिर्महदर्जुनस्य मूर्ध्नः ।
परिवहपवनः पुरेव श्रृङ्गं
फणिपतिना कृतमत्सर स्सुमेरोः ॥ 57

स तमवनितले निपात्य वेगा
त्पुनरपि शीर्षजिहीर्षयाऽऽपतन्तम् ।
मधुरिपुवचसा विवृत्य बाणै-
श्शकलयति स्म मुदं च शात्रवाणाम् ॥ 58

तपनतनयमायकेन सद्य-
स्सिततुरगस्य धनुर्गुणे विलूने ।
ग्रहणघटनकर्षणान्यपश्य
त्पुनरपरस्य न कोऽपि वेगयेगात् ॥ 59

सितहयशरखण्डिताङ्गभर्तु-
ध्वजशिखरान्निपपात हस्तिकक्ष्या ।
मणिकिरणभरानुबन्धिनीं तां
सभयममंसत सैनिका महोल्काम् ॥ 60

क्षयरविरिव मण्डलान्मयूखं
जलनिधिशोषकरं कुरुप्रवीरः ।
द्विषदसुहरमञ्जसा निषङ्गा
दुदहरदञ्जलिकं पृषत्कवर्यम् ॥ 61

ज्वलति धनुषि तेन संहतेऽस्मि-
न्प्रकुपितकालकटाक्षजालमित्रे ।
निजसुतकुशलस्मृतिप्रसक्तौ
दशशतरश्मिविलोचनावभूताम् ॥ 62

रणभुवि निपपात लूनकण्ठं
सिततुरगप्रहितेन सायकेन ।
दिनकरतनयस्य मौलिभूषा-
मणिरुचिसंवलितासृगुत्तमाङ्गम् ॥ 63

विबुधकुसुमवृष्टिभिः परीतं
गलधमनिक्षतजच्छटानुयातम् ।
प्रतिहतजनदृष्टि तत्कबन्धा-
दुदितमहर्पतिबिम्बमाप तेजः ॥ 64

अथ नयनसहस्रोद्गीर्णहर्षाश्रुबिन्दु-
द्विगुणितमकरन्दस्यन्दसौरभ्यबन्धुः ।
शिरसि मकुटशून्ये कर्णशत्रोः पपात
त्रिदशपतिविसृष्टा तत्क्षणं पुष्पवृष्टिः ॥ 65

सुतनिधनशुचेव क्षीणधाम्नि प्रयाते
सवितरि चरमाद्रिं कुरुसैन्यापहारौ ।
शिबिरमवनिपालौ शीतरोचिःकुलीनौ
ययतुरवकिरन्तौ हर्षशोकाश्रुवर्षम् ॥ 66

इत्यगस्त्यपण्डितकृतौ बालभारते महाकाव्ये
सप्तदशस्सर्गः

# अथाष्टादशस्सर्गः

प्रगे हतानुजसुहृदापि भूभुजा
पृथासुतैस्सममथ सन्धिमिच्छतः ।
कृपस्य नाद्रियत वचो युयुत्सुना
विपत्स्वपि स्थिरधिय एव मानिनः ॥ 1

अयं कृती गुरुतनयस्य शासना
च्चमूपतिं व्यतनुत मद्रनायकम् ।
स चाहृतस्समगिरताधिविक्रमः
ससारथिर्युधि हननं किरीटिनः ॥ 2

बलैस्ततः कृतघनहर्षनिस्वनैः
प्रकम्पयन्निव चलितैर्वसुन्धराम् ।
अधिष्ठितः कुरुपतिराहवाजिरं
यथापुरं विमतचमूमयोधयन् ॥ 3

समीरिता बलवदमर्षवायुना
वरूथिनीपतिमभिगम्य कौरवम् ।
अनुभृतो दिशि दिशि भङ्गमाययु
स्तटक्षमाधरमुदधेरिवोर्मयः ॥ 4

चमूरजःपरिवृतखे नभश्शिखां
ध्रुवं गते सवितरि धर्मसूनुना ।
स जित्वरो रणभुवि शक्तिपाणिना
न्यहन्यत ज्वलनभुवेव तारकः ॥ 5

महीभुजा प्रकटितहस्तकौशलम्
स्वशक्तितस्सुमहति शल्य उद्धृते ।
उपागतप्रचुरतराङ्गपीडया
प्रहृष्टया समजनि पाण्डुसेनया ॥ 6

अनायकं गतमतिकान्दिशीकता
मनाविकं प्लवमिव मारुताकुलम् ।
न्यवारयन्निजबलमाश्रितद्विपः
पतिर्विशां प्रकटितपन्नगध्वजः ॥ 7

विशृङ्खलं विशसितशेषमर्जुने
निवर्हयत्यलघुबलं सुशर्मणः ।
शरोत्करैस्समिति यमोपमौ यमौ
निजघ्नतुश्शकुनिमुलूकमप्युभौ ॥ 8

समानतां प्रथममवाप कौरवी
वरूथिनी युगविगमाम्बुराशिना ।
अनन्तरं त्रिपथगया तुलामया-
त्तपागमह्रदसमतां ततो ययौ ॥ 9

किरीटिना युधि निहतेषु यन्नृषु
स्वयं समाकलिततदीयकर्मभिः ।
भयाकुलैर्दिशि दिशि दत्तदृष्टिभिः
प्रदुद्रुवे कृपगुरुसूनुसात्वतैः ॥ 10

हते बले महति भयेन विह्वलः
पलायितस्सरसि ममज्ज कौरवः ।
निपातिते कुलिशभृता गिरिव्रजे
निधावपामिव हिमभूधरात्मजः ॥ 11

क्रुधाकुलः कुरुकुलपद्मकुञ्जरो
मधुद्रुहा सह सहजैश्च मारुतिः ।
गवेषयन्प्रतिभटमभ्रमद्रथी
समन्ततस्सपदि समन्तपञ्चकम् ॥ 12

कृतानतिस्त्वरितमुपेत्य कश्चन
न्यवेदयत्पवनसुताय वांसिकः ।
सरस्तटे नरपतिलक्षणाङ्कितां
निरूपितां नवपदपङ्क्तिमात्मना ॥ 13

निशम्य तद्वचनमतिप्रहृष्यता
पुरस्कृतं तदनु यथा बकारिणा ।
सलक्षणान्यहितपदानि पश्यता
सहापरैस्त्वरितमवापि तत्सरः ॥ 14

तदन्तरस्थितमवगम्य वैरिणं
वृकोदरः कृतघनगर्जितोऽवदत् ।
हतानुजश्शमयसि शोकपावकं
सरोऽम्भसा न तु शितशस्त्रधारया ॥ 15

इति ब्रुवञ्छकुनियुतं विगाह्य त
न्मानस्विना कुरुपतिना सनाथितम् ।
व्यलोडयद्बहलहरिप्रचारव
न्महाभुजो बलमिव शात्रवं सरः ॥ 16

द्विषा मधोरिव पवमानसूनुना
विलोडितं ह्रदमपहाय निर्ययौ ।
अमर्षतः कुरुपतिरुद्धतं श्वसन्
कलिन्दजागत इव कालियोरगः ॥ 17

सरस्वतीसविधतपोवनागतं
हलायुधं गुरुमभिवन्द्य सादरम् ।
बकारिणा कुरुपतिना च दारुणं
गदारणं त्रिदशनुतं प्रचक्रमे ॥ 18

तयोस्तदा दृढतरबद्धकक्षयो
रुदञ्चितभ्रमितगदाकरालयोः ।
प्रकम्पितक्षिति चरतोश्च मण्डलै
र्वपुर्ययौ सुभटजनैकदृश्यताम् ॥ 19

मिथोगदायुगलविघट्टितोत्थिता
खराहतिर्ज्वलनकणानुषङ्गिणी ।
क्षणद्युतिव्यतिकरतोऽशनिध्वनि
व्यडम्बयद्भयचकिताप्सरश्श्रुता ॥ 20

यदा यदा नृपमजयद्वृकोदर
स्तदा तदा हलहलितं चमूचरैः ।
यदा यदा व्यजयत तं सुयोधन
स्तदा तदा न चमदकारि चारणैः ॥ 21

निजप्रियानिकृतिविधेस्सभान्तरे
रणक्षितावनुजवधस्य चोभयोः ।
अतिक्रुधौ सदृशमनीककौशलं
विवव्रतुस्तुहिनकरान्वयावुभौ ॥ 22

गदाहतिस्रवदसृगाप्लुताकृतिं
चमूचरा गतमभिभावनीयताम् ।
वृकोदरं प्रबलतया विजज्ञिरे
सुयोधनं समधिकया च शिक्षया ॥ 23

जितश्रमक्षितिपवधे पटीयसे
निजं मुखं पवनसुताय पश्यते ।
असूच्यत प्रतिभटसक्थिभञ्जनं
मधुद्विषा करपुटताडितोरुणा च ॥ 24

उपेयुषा प्रहरणमोहविप्लवं
खमुत्पतन्नथ गदया तरस्विना ।
अभज्यत क्षितिपतिरूरुदण्डयोः
पतत्त्रयोस्सुरशिखरीव वज्रिणा ॥ 25

बकद्विषा क्षणदलितोरुमण्डलः
क्षितौ पतन्ननुहरते स्म पार्थिवः ।
गरुत्मता फणधरमर्धखण्डितं
सुरद्रुमं क्षयमरुता च मोटितम् ॥ 26

अशेषभूवलयविभुत्वसम्भृतैः
पवित्रिते भृशमभिषेकवारिभिः ।
गते परप्रणतिकलानभिज्ञतां
पदेन तं शिरसि जघान पाण्डवः ॥ 27

गदाहवेष्वनुचितमूरुभञ्जनं
पदा शिरस्यभिहननं च भूपतेः ।
अमर्षयन्ननिलभुवो जिघांसया
समुद्यतो हलभृदवारि शौरिणा ॥ 28

अथासकृत्कृतजयशङ्खनिस्वना
भुजाबलादधिगतराज्यसम्पदः ।
बलैस्समं विजयिभिरुच्छ्रितध्वजं
पृथासुताश्शिबिरमभिप्रतस्थिरे ॥ 29

गते दिने परिणतिमागतः कृती
गुरोस्सुतः कृपकृतवर्मसङ्गतः ।
रणाङ्गणे हतनरवाजिकुञ्जरे
गवेषणं कुरुवसुधापतेर्व्यधात् ॥ 30

ततस्सरस्तटभुवि तं व्यलोकयद्
द्विषद्गदामुखदलितोरुमण्डलम् ।
त्विषां पतेरवतरतो नभःपथा
ध्रुवं रथात्पतितमिवारुणं क्षितौ ॥ 31

उपेयुषामुपरि मृषातपत्रतां
पतत्त्रिणामविरतवारणाकुलम् ।
शुनां पुरः परिजनवन्निषेदुषां
विभर्त्सनं विदधतमग्रपाणिना ॥ 32

सुहृत्सुतानुजगुरुबन्धुभिर्हतैः
शिवाशताकुलितवपुर्भिराचिते ।
उदश्रुवाःकणनिचिताग्रपक्ष्मणी
विलोचने विदधतमाहवस्थले ॥ 33

त्रिभिश्च तैर्निकटगतैरुदश्रुभिः
पतिः क्षितेरनुशुशुचे तथाविधः ।
अलं शुचा सुभटवरा इति ब्रुवन्
व्यधत्त तान्विदितगदायुधक्रमान् ॥ 34

निशम्य तामनुचितकारितां द्विषो
रुषा दृशौ दधदधिकं कषायिते ।
स्फुटाधरस्फुरणविसंस्थुलाक्षरं
वचोऽवदद्गुरुतनयः कुरूद्वहम् ॥ 35

अयं जनः क्षितिप भवन्निदेशभा
गिमौ भुजाविव कलयन्महारथौ ।
प्रविश्य तच्छिबिरमुदग्रविक्रमो
निशि ध्रुवं तव निहनिष्यति द्विषः ॥ 36

निशम्य तद्वचनमतिप्रहृष्यतो
निदेशतः कनकशिरस्त्रसम्भृतैः ।
सरोजलैरतनुत तस्य गौतमः
पताकिनीरमणपदेऽभिषेचनम् ॥ 37

द्विषद्वधश्रवणसुखादनन्तरं
विभूषयेर्दिवमिति भूपतिं ब्रुवन् ।
रथी ययौ सहकृपभोजपुङ्गव
श्चमूपतिर्विमतनिवेशसम्मुखः ॥ 38

लयस्पृशि स्वकिरणबन्धुसन्ततौ
नभस्स्थलीं रणवसुधामिव त्यजन् ।
पतिस्त्विषां सपदि ममज्ज पश्चिमे
पयोनिधौ सरसि यथा सुयोधनः ॥ 39

अनेहसा धृतनवसान्ध्यतेजसा
तमश्छटा दिशि दिशि भृङ्गकान्तयः ।
बबन्धिरे रिपुरुधिरार्द्रपाणिना
बकारिणा द्रुपदवधूकचा इव ॥ 40

पथि व्रजन् गुरुतनयः पृथाभुवां
जिघांसयाभिमुखयितुं पुरान्तकम् ।
प्रभावतस्समुपनते सकार्मुकं
निजं वपुर्ज्वलति जुहाव पावके ॥ 41

प्रसेदिवान्पुररिपुरस्य साहसा
त्कृपानिधिः कमपि कृपाणमुद्वहन् ।
स्वविग्रहान्तरमपि तेजसानलं
हतप्रभं विदधदधत्त सन्निधिम् ॥ 42

पुरस्फुरन्मुकुटमृगाङ्कचन्द्रिका
जलप्लुतोऽनलपरितापिताकृतिम् ।
कृताञ्जलिं कृतिनमुदीरितस्तुतिं
जगाद तं जगदधिभूर्जयैषिणम् ॥ 43

अनेन ते मुदमविधत्स्वकर्मणा
गतोऽस्म्यहं द्युतिमहतामुनासिना ।
विना जगत्प्रथितगुणांस्तु पाण्डवान्
द्विषोऽखिलांत्सपदि निबर्हयिष्यसि ॥ 44

इति ब्रुवन्नसिमुपनीय धूर्जटि
र्गलप्रभाभरमिव खड्गतां गतम् ।
तिरोदधे स च मुदितस्तदायुधं
करस्थितं सफलममंस्त काङ्क्षितम् ॥ 45

जितद्विषामिह निशि वस्तुमत्र वो
न युक्तमित्यसुररिपुस्ससात्यकिः ।
निनाय तान्छिबिरभुवो बहिः क्वचि
द्वरं हि तत्सुतनिधनं तु तद्वधात् ॥ 46

स विस्मयाकुलकृपसात्वतान्वितः
स्वपज्जनं शिबिरमपश्यदग्रतः ।
उपेक्षितं मधुरिपुणापि रक्षिणा
युगात्यये जगदिव कालभैरवः ॥ 47

विनिर्यतां हननविधौ नियुज्य तौ
शिखण्डिमच्छिबिरमविक्षदुद्धतः ।
सहेतिमान्यदुकुरुवीरपुङ्गवौ
पुरा हुताशन इव खाण्डवं वनम् ॥ 48

समुद्वहन्पशुपतिदत्तमायुधं
बहु क्षमारमणकुलक्षयोद्यतः ।
स रेणुकासुत इव हैहयप्रभोः
पितृद्विषः प्रथममवापदास्पदम् ॥ 49

स रोषणः पटमयवेश्मनि क्वचि
द्वितानिते सुखशयितं विरोधिनम् ।
व्यलोकयन्मृगमदपङ्कचर्चितं
वनद्विपं मृगयुरिवाद्रिकन्दरे ॥ 50

उपस्थिते तव मयि जीवितान्तके
कथं त्वयापशद सुखेन सुप्यते ।
इति ब्रुवन्पदहननेन वक्षसि
प्रबोधितं सुचिरममुं न्यपोथयत् ॥ 51

गुरुद्रुहो भवति मृतिर्न शस्त्रत
स्तवेत्यमुं यमकरपाशकल्पया ।
धनुर्ज्यया सुदृढनिपीडिताद्गला
त्कथंचन व्यपगतजीवितं व्यधात् ॥ 52

कृतार्थतां कलयति वैरशुद्धित
स्ततो विनिर्गतवति सिंहनादिनि ।
विनिद्रतां शिबिरजनाः प्रपेदिरे
वनौकसः श्रुतघनगर्जिता इव ॥ 53

तरस्विनि त्रिपुरभिदाज्ञयोद्धते
निजागमं कलयति वीरभद्रवत् ।
दधुर्भयं कतिचन केचिदायुधं
प्रजापतिक्रतुमिलिता इवामराः ॥ 54

ससम्भ्रमाः कतिचन तत्र सैनिकाः
शिरस्त्रमित्यदधत मूर्ध्नि कञ्चुकम् ।
दधुर्धनुर्धनुरिति वादिनो गदां
रथभ्रमादधिरुरुहुर्मतङ्गजान् ॥ 55

समागतान्द्रुतमथ पञ्च वर्मिता
नुदायुधान्द्रुपदसुतात्मजन्मनः ।
द्विषत्कुलं ग्रसनपरोऽयमादधे
धृतोष्मणा गुरुतनयासिराहुतीः ॥ 56

तरस्विना दिशि दिशि खड्गधारया
व्यभिद्यत प्रतिभटशस्त्रसंहतिः ।
युगावधाविव कपटेन पोत्रिणा
सघोषया जलनिधिवीचिसंहतिः ॥ 57

निरन्तरं निशितमुखैर्निजं वपुः
शिलीमुखैरपि दधतश्शिखण्डिनः ।
स निम्नगातनयरिपोर्वधाद्यथा
मुदं दधौ न खलु तथा गुरुद्रुहः ॥ 58

बहिःस्थितौ कृपहृदिकात्मजावुभौ
धनुर्गुणध्वनिभृतविश्वदिङ्मुखौ ।
भयाकुलानपि शिबिराद्विनिर्यतः
शितैः शरैः प्रविदलयाम्बभूवतुः ॥ 59

तरस्विभिस्त्रिभिरनघैर्निजायुधै
विंदारितद्विरदतुरङ्गसैनिकात् ।
निवेशतः खरकिरणालि केवलं
विनिर्गतं रुधिरतरङ्गिणीशतम् ॥ 60

त्रिभिश्च तैरिति गजवाजिपङ्क्तिभि
र्निरन्तरे रिपुशिबिरे निबर्हिते ।
विलोकितं न किमपि तत्र सञ्चर
त्कुलं विना पिशितभुजां तु रक्षसाम् 61

परामृशन्नसकृदसृग्भिराचितां
कृपाणिकां कृपहृदिकात्मजस्सुतः ।
पुनस्सरस्तटभुवमेत्य स व्यधा
च्छ्रुताहितक्षयसुखिनं सुयोधनम् ॥ 62

महारथास्समिति भवद्भिरद्य मे
कृतं प्रियं न गुरुपितामहादिभिः ।
रणश्रमव्यपनयनाय गम्यता
मिति ब्रुवन्व्यसृजदसावसूनपि ॥ 63

कृपे वधूकरुणविलापि कौरवं
पुरं गते हृदिकसुते च यादवम् ।
पराशरप्रभवतपोवनं गतः
शमं व्रजन् गुरुतनयोऽस्त्रमत्यजत् ॥ 64

गता पृथासुतबलकालरात्रिताम्
महारथत्रयचरितैकसाक्षिणी ।
रणक्रतोरवभृथतामुपेयुषी
क्रमेण सा क्षयमगमन्निशीथिनी ॥ 65

उषस्यथ द्रुपदसुतस्य सारथे
रुपागतादधिगतबन्धुतावधः ।
सहानुजैश्शुचमवहन्महीपति
र्न कस्य वा नियतिरुपैति वक्रताम् ॥ 66

उपेत्य तच्छिबिरमुदीक्ष्य पार्षती
हताखिलाग्रजसुतबन्धुमूर्छिता ।
पुलोमजा दनुजवरूथिनीगजै
र्विमर्दितद्रुममिव नन्दनं वनम् ॥ 67

विबुध्य सा व्यजनमरुत्किशोरकै
श्चिरादुरोहननपरेण पाणिना
प्रमार्जयन्त्यतिशयरोदनारुणां
जलप्लुतं दृशमवदन्मरुत्सुतम् ॥ 68

सुतद्विषस्समिति जितस्य जीविता
दपि प्रियं हर सहजं शिरोमणिम् ।
न चेद्व्रतं निरशनमाश्रिता हता
नयं जनो नियतमसून्विमोक्ष्यति ॥ 69

अथास्थितस्स नकुलसारथिं रथं
धनुर्धरो रिपुरथवर्त्मना ययौ ।
तमन्वगात्तदनु तदग्रजानुजौ
निजं रथं द्रुतमधिरोप्य माधवः ॥ 70

त्रिभिस्स तैर्गुरुसुतशौर्यभीतिभि
र्निवारितोऽप्यसकृदमर्षचोदितः ।
रथस्वनश्रुतिकुतुकापयन्मृगं
वृकोदरो महितमवापदाश्रमम् ॥ 71

स तत्र तं बहुदिवसाहिताहवं
विरोधिनं धृतकुशचीरवाससम् ।
स्वहेतिभिः कबलितविष्टपत्रयं
युगक्षयानलमिव शान्तमैक्षत ॥ 72

तमभियान्तमुदीक्ष्य तरस्विनं
परुषवाचमसौ तरसान्वितम् ।
प्रकटमन्युरपाण्डवमस्त्विति
प्रयुयुजे परमास्त्रमिषीकया ॥ 73

ज्वलदाप तदाशु तद्विलोक्य
त्रसता दानववैरिणा नियुक्तः ।
विजयः प्रशमार्थमस्य धीमा
नमुचद्ब्रह्मशिरोऽभिधानमस्त्रम् ॥ 74

द्रुहिणतनयो व्यासश्चोभौ विलोक्य महास्त्रयो
र्विहितवसतिमध्ये मत्तेभयोरिव देशिकौ ।
तदनुनयतः पार्थेनास्त्रं निजं प्रतिसंहृतं
न खलु महतामाज्ञां सन्तो विलङ्घयितुं क्षमाः ॥ 75

द्रौणिस्तु नारदपराशरनन्दनाभ्या
मभ्यर्थितस्सुकृतिनः परिवर्ज्य पार्थान् ।
गर्भे विराटसुतया विधृते तदीये
मोक्तुं चकाङ्क्ष निजमप्रतिघातमस्त्रम् ॥ 76

तं तु प्रत्युज्जीवयिष्यन्प्रभावा
त्तस्मिञ्छौरिर्द्रौणिनोऽस्त्रं निपात्य ।
भ्रूणघ्नस्ते शून्यकान्तारवासः
शश्वद्भूयादित्यदाच्छापमस्मै ॥ 77

शापोपसृष्टमहसो मणिमस्य हृत्वा
मन्त्रक्षतौजस इवाहिपतेः शिरस्तः ।
सभ्रातृकस्सह यदुप्रवरेण भीमः
प्रत्यागतश्शुचमनेन जहार पत्न्याः ॥ 78

इत्यगस्त्यपण्डितकृतौ बालभारते महाकाव्ये
अष्टादशस्सर्गः

# अथैकोनविंशस्सर्गः

निशम्य पुत्रान्निहतान्नृपांश्च
विगाढशोकं विलपन्तमुच्चैः ।
व्यासो वचोभिर्विदुरश्च तैस्तै
राश्वासयामासतुराम्बिकेयम् ॥ 1

प्रतिष्ठमाने रणभूमिमस्मि
न्दिदृक्षवो बन्धुजनं रुदत्यः ।
पुरान्निरीयुः प्रविकीर्णकेशा
गान्धारपुत्रीं परिवार्य नार्यः ॥ 2

वीणानिनादानुकृतिप्रवीणै
रापूरयन्त्यः करुणैर्दिगन्तान् ।
हा नाथ हा मातुल हा तनूज
हा तात हा भ्रातरिति प्रलापैः ॥ 3

उरोदृढास्फालनजायमानं
प्रत्यग्रकाश्मीरविलेपकल्पम् ।
करारविन्देभ्य इव स्तनेषु
लग्नं वहन्त्यः परिपाटलत्वम् ॥ 4

निरञ्जनक्लेदनितान्तशुभ्रैः
पयोधराग्रेषु निपत्य शीर्णैः ।
कदुष्णतामश्रुभिरश्नुवानै
र्मार्गेषु पांसुप्रशमं नयन्त्यः ॥ 5

तमापतन्तं पथि पाण्डुसूनुः
पितृव्यमालोकयितुं चचाल ।
पाञ्चालमुख्यक्षितिपालदारै
रात्तप्रलापैरनुगम्यमानः ॥ 6

अजातशत्रो नृप धर्मपुत्र
लब्धेन सर्वांश्च निहत्य बन्धून् ।
राज्येन किं नाम फलं तवेति
क्रन्दद्वधूवृन्दमपश्यदग्रे ॥ 7

विलङ्घ्य तत्सोऽतिविषण्णचेता
ददर्श तं पुत्रविहीनपार्श्वम् ।
निकृत्तशाखानिवहेन साम्यं
स्तम्भावशेषेण गतं द्रुमेन ॥ 8

तं भ्रातरः शोकविलुप्तधैर्यं
पञ्चापि पञ्चाननशौर्यभाजः ।
निजानि नामानि निवेदयन्तः
शिरोभिराश्लिष्टभुवः प्रणेमुः ॥ 9

अजातशत्रुं परिरभ्य पूर्व
मन्विष्यतः पुत्ररिपुं मुरारिः ।
विकृष्य भीमं प्रतिमां तदीया
मयोमयीमस्य पुरो वितेने ॥ 10

तां भीमबुध्या भुजमध्यभाजं
भङ्क्त्वा परिष्वङ्गनिभेन शान्तम् ।
हा भीमसेनेति कृतप्रलापं
जगाद पृथ्वीपतिमम्बुजाक्षः ॥ 11

अलं शुचा त्वत्सुतकारितोऽय
मयोमयो वायुसुतो न साक्षात् ।
तव क्रुधः पुत्रवधोत्थितायाः
शान्त्यर्थमानायि मया नियोज्यैः ॥ 12

श्रुत्वा वचस्तस्य परं प्रहृष्टः
पुत्रान्परिष्वज्य वृकोदरादीन् ।
अजातशत्रुं सुबलात्मजायां
विलोकनायादिशति स्म भूपः ॥ 13

सा तेन राज्ञी ददृशे परीता
कृतार्तनादेन वधूजनेन
वृन्देन चक्राह्वयसुन्दरीणां
दिनावसाने नलिनीव दीना ॥ 14

तां च क्रुधा पुत्रवधाज्ज्वलन्तीं
समुद्यतां शप्तुमजातशत्रुम् ।
न्यवारयत्तत्सुतवृत्तशङ्की
तपोधनो गन्धवतीतनूजः ॥ 15

कुरूद्वहस्तां कुपितां विदित्वा
भीतः पुरः प्राञ्जलिराबभाषे ।
क्रूरं हतभ्रातृसुहृत्सुतं मां
शापोचितं मातरि मा शपेति ॥ 16

तां मन्दमन्युप्रसरां प्रणम्य
स्थितामदूरे जननीं जनेशः ।
शोकप्रमोदौ दधती ददर्श
द्यां पर्वणीवोष्णहिमांशुबिम्बौ ॥ 17

वीरप्रसूरानमतः क्रमेण
सङ्ग्रामलक्ष्मीपरिरम्भधन्यान् ।
प्रवीरशस्त्रव्रणभूषणेषु
पस्पर्श गात्रेषु चिराय पुत्रान् ॥ 18

तत्रोभयेषामपि भूपतीना
मन्तःपुराण्याहितमण्डनानि ।
अकङ्कणाभिः करवल्लरीभि
राश्लिष्टकण्ठानि मिथो विलेपुः ॥ 19

आर्तप्रलापाक्षरगर्भितानि
बाष्पायमाणारुणलोचनानि
ननन्द पश्यन्नरिसुन्दरीणां
मुखारविन्दानि समीरसूनुः ॥ 20

ततः पुरस्कृत्य सुजातकीर्ति
विशाम्पतिं वृद्धमजातशत्रुः ।
यूनामरातिक्षितिभृत्पशूनां
घोरामनीकक्षितिमाससाद ॥ 21

गृहाङ्गणे सप्रसवोपहारे
स्त्रीणामदूयन्त पदानि यासाम् ।
ता बभ्रमुश्शस्त्रशतावकीर्णे
रणाजिरे बन्धुजनं विचेतुम् ॥ 22

स्वेनप्रवासावसरे वितीर्णं
नखक्षतं वक्षसि वीक्ष्य नव्यम् ।
निरन्तरास्त्रव्रणदुर्निरूपं
निजं प्रियं काचन निश्चिकाय ॥ 23

शस्त्रव्रणेषु ग्रसितुं यकृन्ति
खगैर्विशद्भिश्श्लथिताङ्गमन्या ।
सजीव इत्यासददात्मनाथं
पदैः प्रहर्षेण परिस्खलद्भिः ॥ 24

कबन्धभावं गमितः परेण
विहङ्गदूरापहृतोत्तमाङ्गः ।
निजः कयाचिन्निपुणं विजज्ञे
नामाङ्ककेयूरयुगेन नाथः ॥ 25

मुग्धा परा जीवितवल्लभस्य
वामेतरे दोष्णि शिवोपभुक्ते ।
तच्छङ्कया वारणहस्तदण्डं
निवेशयामास यथाप्रदेशम् ॥ 26

विलूनगात्रं लवशः पृषत्कै
रारादृष्ट्वा हृदयेशमेका ।
उत्खाय मातङ्गशिरोनिखातं
प्रासं तदीयं दृढमालिलिङ्ग ॥ 27

गजेन्द्रशुण्डावलयान्तरस्थं
परेयिवांसं पतिमीक्षमाणा ।
सस्मार काचित्सुरतान्तरेषु
निजोरुसंवेष्टनमध्यभाजम् ॥ 28

भर्तारमेका गजपुङ्गवस्य
दन्तद्वयप्रोतभुजान्तरालम् ।
खड्गप्रहारोत्थितकुम्भमुक्ता
जालाभिवृष्टाननमभ्यनन्दत् ॥ 29

देवेन पङ्केरुहलोचनेन
वितीर्णया दिव्यदृशातिघोराम् ।
रणक्षितिं वीक्ष्य तमन्तिकस्थं
गान्धारनाथस्य जगाद पुत्री ॥ 30

पश्याग्रतः पङ्कजनाभ ताव
दसौ हतः शन्तनुनन्दनेन ।
अधोमुखत्वं गतवानिरावा
न्पातालगर्भं विशतीव भूयः ॥ 31

इतो यदुश्रेष्ठ विलोकयैनं
विसृत्वरैरस्त्रशिखाकलापैः ।
विरोधिसेनाविपिनानि दग्ध्वा
शान्तार्चिषं शान्तनवं कृशानुम् ॥ 32

सुयोधनावर्जितमेष हित्वा
निषेव्य पार्थास्त्रवितीर्णमम्भः ।
सुखेन शेते शरतल्पमध्ये
बाणां स्तदीयानुपधाय वीरः ॥ 33

पुरन्ध्रयः पुण्ड्रकभूमिभर्तुः
शरीरखण्डान्विशिखै र्विकीर्णान् ।
विचिन्त्य भक्त्या विनिवेशयन्ति
सीमन्तशून्येषु शिरस्सु बालाः ॥ 34

कुलाङ्गना स्कन्धगतं गजस्य
कालिंगमालिङ्गितुमुत्सुकेयम् ।
विभाति विन्यस्तपदा रदाग्रे
गतेव भूरादिवराहदंष्ट्राम् ॥ 35

पिशाचिका काचन काशिभर्तु
नीतं शिरो विभ्रमकन्दुकत्वम् ।
अभ्यर्थिने तत्प्रमदाजनाय
ददाति भूयो दयमानचेताः ॥ 36

मध्ये गजानां मगधाधिनाथं
गवेषयन्ती महिषी तदीया ।
क्वचिच्च दृष्टा क्वचिदप्यदृष्टा
विद्योतते विद्युदिवाभ्रवृन्दे ॥ 37

परासुतां प्राप्तवतोऽधुनापि
प्रफुल्लपद्मद्युतिलक्षणस्य ।
गृध्रैरवेक्ष्याननमर्धजग्धं
यात्यष्टमीयामवतीशसाम्यम् ॥ 38

आपुङ्खमग्नामुरसः कथंचि
दुत्खाय बाणावलिमुत्तरेयम् ।
आजिघ्रती सस्पृहमाननेन्दौ
त्वदीयमालिङ्गति भागिनेयम् ॥ 39

विन्दानुविन्दौ विजयास्त्रमग्ना
विमौ धरित्रीगतबाहुशाखौ ।
त्वया पुरा शैशवपातिताभ्यां
तुलां दधाते यमलार्जुनाभ्याम् ॥ 40

अमी तु भूरिश्रवसोऽवरोधा
विमोच्य मुष्टेः प्रसभं कृपाणम् ।
प्रत्येकमुद्यत्पुलकेषु भर्तुः
कुर्वन्ति हस्तं कुचमण्डलेषु ॥ 41

सीमन्तनिर्मातृनखाग्र एष
व्यग्राङ्गुलीकस्तिलकक्रियायाम् ।
आमोदितश्चागरुणो विलेपा
द्वक्षोजयोर्धन्यतरो वधूनाम् ॥ 42

ममात्मजा माधव दुश्शलेयं
पार्श्वे शिरस्सिन्धुपतेरदृष्ट्वा ।
अन्यानि सन्धाय मुहुः कबन्धे
नैतान्यमुष्येति विषादमेति ॥ 43

निजं कुमारं निहतं हिडिम्बा
निरीक्ष्य मूर्छाकुलिताकुलाक्षी ।
निशाचरीभिः क्षतजोक्षितेयं
संवीज्यते कुञ्जरकर्णतालैः ॥ 44

केशेष्वभेदं पलितेन याते
सवेगमादाय निरूप्य सम्यक् ।
स्वभर्तृशीर्षे परिवर्तयन्ति
मिथो विराट्द्रुपदावरोधाः ॥ 45

पादौ गुरोरत्र परार्ध्यभूम्नः
कदम्बकं कर्षति जम्बुकानाम् ।
अजातशत्रुप्रमुखेन पूर्वं
यौ शिष्यवर्गेण शिरोभिरूढौ ॥ 46

पराभिमर्शप्रभवेन नूनं
व्रीडेन सम्मीलितलोचनान्तम् ।
प्रक्षालयत्यश्रुभिरस्य पत्नी
रजोभिराधूसरमुत्तमाङ्गम् ॥ 47

पर्यस्तदेहो विजयद्विपस्य
कुम्भस्थले दृश्यत एष पाण्ड्यः ।
द्रोणात्मजेषुत्रुटितस्य मूर्ध्नो
जिघृक्षयेव प्रविलम्बिबाहुः ॥ 48

दुश्शासनस्येदमुरो विशालं
विदारितं मारुतनन्दनेन ।
हाराश्मरश्मिच्छुरणच्छलेन
निपीतशेषं क्षरतीव रक्तम् ॥ 49

करावमुष्य द्रुपदात्मजायाः
केशाम्बराकर्षणदुर्विदग्धौ ।
पृथासुतानां हितकारिणेव
च्छित्वा शकुन्तप्रकरेण कृष्टौ ॥ 50

आशङ्क्य यस्माद्द्विपदं सचिन्तो
लेभे दश त्रीणि च हायनानि ।
न जातु संवेशमजातशत्रुः
स एष कर्णो निहतोऽत्र शेते ॥ 51

इयं तु वीरा वृषसेनमाता
शिरो निधायाङ्कभुवि स्वभर्तुः ।
करेण कम्पाङ्गुलिपल्लवेन
प्रमार्ष्टि पांसुच्छुरितं कपोलम् ॥ 52

त्रासाकुला मन्दिरबर्हिणीनां
क्रीडामृगाणामुपसर्पणेऽपि ।
स्नुषा ममैताः प्रियगात्रलग्ना
नुत्सारयन्तीह खगान्सृगालान् ॥ 53

इतश्च दुर्योधन एव शेते
सुपर्वमुक्तप्रसवाभिवृष्टः ।
सरस्तटे लोहितचन्दनार्द्रां
प्रियामिवालिङ्ग्य गदां प्रवीरः ॥ 54

पुरा निबद्धाञ्जलयो नरेन्द्रा
यत्पार्श्वयोरासत चाटुकाराः ।
तदन्तिके हन्त सृगालसंघा
वसन्ति दृप्ता विरसं रसन्तः ॥ 55

मोहावसाने विविधं विलप्य
धैर्यं व्रजन्त्या किल भानुमत्या ।
अङ्के धृतस्य क्रियतेऽस्य भर्तुः
स्वेनैव चेलाञ्चलमातपत्रम् ॥ 56

ध्रुवं व्यथादुःखपरम्परार्हां
मां वज्रसारेण सरोजयोनिः ॥
यदेनमेवंविधमद्य पापा
दृष्ट्वा विशीर्ये न सहस्रधाहम् ॥ 57

उपेक्षया ते भरतान्ववायाः
मिथो यथैते निधनं प्रपन्नाः ।
तथा भजन्तां यदवोऽपि सर्वे
भवांश्च भूयाद्वनसीम्नि मुक्तः ॥ 58

शप्त्वैवमेनं शतपत्रनाभं
गांधारपुत्री विरराम वाचः ।
सोऽपि प्रसादं मनुते स्म शापं
भारावताराय भुवोऽवतीर्णः ॥ 59

क्षत्त्रा नियुक्तो नृपपुङ्गवेन
धौम्यं पुरस्कृत्य सभृत्यवर्गः ।
न्यवेशयत्सागरुचन्दनेषु
चिताहुताशेषु हतानशेषान् ॥ 60

दग्धेषु देहेष्वनलेन राज्ञां
क्षयाग्निनेवाद्रिषु तादृशेषु ।
वृद्धं पुरस्कृत्य नृपं नरेन्द्रो
गङ्गापगां स्नातुमनाः प्रतस्थे ॥ 61

आक्रन्दसन्नस्वरमारटन्त्यो
नरेन्द्रपत्न्यस्तमनुव्रजन्त्यः ।
पदैरनीकक्षितिशोणितार्द्रै
रलक्तकाङ्कामिव गां वितेनुः ॥ 62

शान्तिं गते शान्तनवे शुचेव
विलापिनीं सारसनिस्वनेन ।
अवापुराश्वासयितुं किलैते
भागीरथीं भारतवंशधुर्याः ॥ 63

स्त्रीणां तदा मज्जनतत्पराणा
मायामिनीभिः कबरीभिरासाम् ।
कलिन्दजाया इव वेणिकाभि
र्दिव्यापगाऽदृश्यत कर्बुरोर्मिः ॥ 64

निवापकर्म स्वजनाय कुर्व
न्नृपो ददाति स दृढानुतापः ।
मिथः पृथाया विदितोद्भवाय
कर्णाय तोयाञ्जलिमग्रजाय ॥ 65

यातः पुरं सोमकुलीनपाल्यं
गतिं गतेभ्यो युधि शस्त्रपूताम् ।
स बान्धवेभ्यः परलोकयोग्यं
सत्यं वितेने विभवानुकूलम् ॥ 66

धौम्यस्तु तं सौम्यगुणं पुरोधा
हैमादुदीर्णैः कलशान्पयोभिः ।
एकातपत्रीकृतभूतधात्री-
चक्रोपभोगोत्सुकमभ्यषिञ्चन् ॥ 67

उपेयुषो जातु निरीक्षणेन
निश्शल्यपीडातिशयो मुरारेः ।
उपस्थितं सायकतल्पशायी
नरेन्द्रमाचष्ट नदीतनूजः ॥ 68

अप्यस्तु ते भद्रमजातशत्रो
भुजङ्गराजप्रतिमस्य बाहोः ।
पुंसामुना संहृतभारखेदां
बिभर्ति यस्स्वैरमिमां धरित्रीम् ॥ 69

पूर्णप्रतिज्ञस्सुकृती चिराय
मरुत्सुतः कच्चिदुपैति साम्यम् ।
निर्व्यूढकार्येण विचक्षणेन
सांयात्रिकेणार्णवपारगेण ॥ 70

तदुत्कटज्यातटिदुग्रघोष
मुपर्युपर्युज्झितबाणवर्षम् ।
निपातितास्त्राशनि कच्चिदास्ते
शान्तं क्वचित्संप्रति गाण्डिवाभ्रम् ॥ 71

कच्चिच्छुभैरुज्झितवेणिरूपै
श्चिराय बध्वाश्चिकुरैररालैः ।
माल्यं प्रविष्टं यमुनापयोभि
र्गङ्गापगास्रोत इवोर्मिमद्भिः ॥ 72

श्रुत्वैवमादीन्कुशलानुयोगान्
पितामहं व्याहरति स्म भूपः ।
स्वश्रेयसं तात मया यदाप्तं
त्वदाशिषामेव विवर्त एषः ॥ 73

भूयस्सरित्सूनुरुवाच भूपं
पाञ्चालपुत्र्या इव भूतधात्र्याः ।
अजातवैरस्य कथाप्रसङ्गे
सहानुजैर्वत्स यतस्व भोगे ॥ 74

सम्भूय ये भूपतयस्त्वदर्थं
प्राणांस्तृणानीव रणेष्वमुञ्चन् ।
तदात्मजान्स्वेषु पदेषु कृत्वा
कृतज्ञवर्गस्य भवाग्रगण्यः ॥ 75

शक्तोऽप्यशेषैश्च भवांस्सहैव
प्रवर्ततां मन्त्रविधावमान्यैः ।
बिभर्ति भारं भुवनस्य सार्ध
माशागजेन्द्रैरधिभूरहीनाम् ॥ 76

परस्परापादितवृद्धिभाजो
र्धर्मार्थयोः कल्पय नातिसक्तिम् ।
ताभ्यामुभाभ्यां सुलभानुबन्धे
कामे च मात्यन्तकृतादरो भूः ॥ 77

फलन्ति वृक्षा निज एव काले
तथा पयोदाश्च सृजन्ति पाथः ।
सदर्थिसन्तर्पणतत्परेण
त्वया तु तद्वत्समयोऽनुकार्यः ॥ 78

दानाम्बुराशेरुदयं प्रपन्न
मासाद्य पूर्णं सुकृतेन्दुबिम्बम् ।
अजस्रमामोदय राज्यलक्ष्मीं
कुमुद्वतीं शुक्ल इव प्रदोषः ॥ 79

विसृत्वरैरध्वरधूमजालै
रष्टासु दिग्भित्तिषु लम्बितासु ।
यशांसि चित्राणि पुरातनानां
महीपतीनां मलिनानि कुर्याः ॥ 80

तथेति तच्छासनमानतेन
स्वीकृत्य मूर्ध्ना मकुटाङ्कितेन ।
पतिः कुरूणां सह माधवेन
प्रत्यासदत्पौरवराजधानीम् ॥ 81

अथायनं दक्षिणमर्यमेव
प्रवीरवर्यस्स विहाय देहम् ।
प्रत्युद्गतोऽन्यैर्वसुभिः प्रहृष्टै
र्वैमानिको धाम निजं प्रपेदे ॥ 82

सरेषुदूरं विजयेषुदूनं
वपुस्तदग्नेर्विषयं विधाय ।
पितामहस्य स्तिमिताश्रुवृष्टि
श्चकार पृथ्वीपतिरिष्टिमन्त्याम् ॥ 83

मत्स्यात्मजागर्भभवं सुभद्रा
परीक्षितं वीक्ष्य महास्त्रदग्धम् ।
पौत्रस्त्वयं मे मृत एव जात
इत्यग्रतो दैत्यरिपोरवादीत् ॥ 84

तप्तां शुचा तामनुकम्पमान
स्तथागतं जीवयितुं कुमारम् ।
पस्पर्श पादेन निदाघतप्तं
सायं तदा कैरवकोशमिन्दुः ॥ 85

प्रत्यागतासावभिमन्युसूनौ
वंशाङ्कुरे तादृशि वर्धमाने ।
महीशमुख्येन मखाय मुक्तं
गाण्डीवधन्वा हयमन्वयासीत् ॥ 86

अलक्ष्यताम्बोनिधिमेखलाया
मितस्ततो वाजिखुराङ्कुरालिः ।
अनन्यसाधारणभोगचिह्ना
नखक्षतालीव नरेन्द्रदत्ता ॥ 87

स बभ्रुवाहाहवलब्धमोहः
संज्ञामुलूप्यागमितः प्रभावात् ।
पार्थोऽभिनन्दन्पथि तीर्थयात्रां
पुरीं निवृत्तस्तुरगानुसारी ॥ 88

विधिवदवसितेऽस्मिन्नश्वमेधे महीय
स्यवभृथपरिपूतं भूपमापृच्छ्य शौरिः ।
रथवरमधिरूढो दारुकेणोपनीतं
मुनिजनविहिताशीर्द्वारकामभ्ययासीत् ॥ 89

इत्यगस्त्यपण्डितकृतौ बालभारते महाकाव्ये
एकोनविंशस्सर्गः

# अथ विंशस्सर्गः

अथ स्वशौर्यार्जितराज्यभाज-
श्छायैव तस्मातपवारणस्य ।
आह्लादयामास भुजावलम्बा
मष्टादशद्वीपवतीं धरित्रीम् ॥ 1

आशुक्लवह्निर्मकुटानि वोढु
मातोपदिष्टाञ्जलिबन्धचिह्नैः ।
स काकपक्षैस्सततं नरेन्द्रा
शिशरोभिरेनं शिशवः प्रणेमुः ॥ 2

स्वयं प्रभुः प्राज्ञतमोऽपि मान्यं
मन्त्रे पुरोधाय निजं पितृव्यम् ।
सभक्तवर्णं चतुरर्णवान्तां
शशास पृथ्वीं पृथुतुल्यसारः ॥ 3

अजातशत्रोरभिजातकीर्तेः
शुश्रूषया सूनृतसत्यवाचः ।
वर्षीयसा यादृगनेन लेभे
हर्षः पुरा पुत्रशतान्न तादृक् ॥ 4

भ्रातुर्विदग्धा हृदयानुवृत्तौ
सहावरोधैर्विजयो यमौ च ।
भीमाहते शश्वदमुक्तवैरा
दाराधयन्ति स्म सदानमेनम् ॥ 5

धृतावलेपा युधि धार्तराष्ट्रा
　　स्सर्वेऽपि यस्मिन्विलयं प्रपन्नाः ।
सुजातरत्नांगदकङ्कणाद्यैः
　　प्रसाध्यतां तद्भुजदण्डयुग्मम् ॥　　6

वक्त्रेण येनामृतवन्निपीतं
　　दुश्शासनासृग्धृतविस्रगन्धम् ।
तस्याधिवासाय यशोवदात
　　मानीयतां मे घनसारखण्डम् ॥　　7

भग्नोरुदण्डस्य सुयोधनस्य
　　बाढं शिरस्ताडनसम्भ्रमेण ।
वामस्य मे जातरुजः पदस्य
　　सम्पाद्यतां चन्दनपङ्कलेपः ॥　　8

इत्थं गिरो मारुतनन्दनस्य
　　गान्धारपुत्र्या सह शुश्रुवानः ।
विगाढमन्युप्रसरो बभूव
　　तरुर्यथा कोटरलीनदावः ॥　　9

भक्त्या नृपस्याहितलक्षणस्य
　　कटूक्तिभेदेन वृकोदरस्य ।
आप्याय्यतातप्यत सोऽतिवेलं
　　ज्योत्स्नातपोभ्यामिव जीवलोकः ॥　　10

निर्विण्णचेतास्स बहुप्रकार
　　मभ्यर्थ्यमानोऽपि युधिष्ठिरेण ।
तत्याज नैवाश्रमवासबुद्धिं
　　भवन्ति सन्तस्समयाद्धहार्याः ॥　　11

शुभे मुहूर्ते भवनाद्वनाय
स धर्मपत्न्या सह निर्जनाय ।
स्कन्धावसक्तः करमुद्वहन्त्या
वन्यद्विपो वाशितयेव कुञ्जात् ॥ 12

निवर्त्य पौरैस्सह पाण्डुपुत्रान्
मनोभिरेषामनुगम्यमानौ ।
तौ दम्पती सञ्जयनीयमाना
वन्वक् प्रतस्थे विदुरस्सहायः ॥ 13

कुन्ती च तावेव मुदान्वयासी
न्नशेलब्धराज्यान् स्वसुतान्निवृत्तान् ।
स्त्रीणां विशेषेण सुखानपेक्षं
वृत्तं हि रक्ष्यं वचनीयतायाः ॥ 14

तीरे नरेन्द्रे त्रिदशापगायाः
नीत्वा निशां बन्धुवियोगदीर्घाम् ।
ततः कुरुक्षेत्रमगादुदीच्यै-
रुदश्रुभिर्जानपदैः प्रहृष्टः ॥ 15

तस्मिन्नपोढा व्यसनप्रसङ्गं
तपोवनं तापसवृन्ददृश्यम् ।
प्रत्युद्गतोऽसौ शतयूपनाम्ना
राजर्षिणा तत्पदमध्युवास ॥ 16

तपो जटावल्कलवांश्चकार
सहैव पत्न्या पृथया च तीव्रम् ।
अनेहसाल्पेन चिराय लभ्यां
लेभे च राजर्षिरिति प्रसिद्धम् ॥ 17

दुरापमन्यैर्विदुरस्तपोभि
रलङ्करिष्यन्नपवर्गमार्गम् ।
पर्यन्तकान्तारचरः प्रपेदे
सख्यं मृगैः संयमिनां स मुख्यः ॥ 18

यदृच्छया जातसुजातकीर्ति
रनुप्लवैस्स्वैरमनुप्रयातैः
गङ्गातरङ्गानिलसेव्यमान
श्चचार पर्यन्तवनस्थलेषु ॥ 19

स तत्र राजा विदुरं ददर्श
दिग्वाससं दीर्घजटाकलापम् ।
कृशं वहन्तं क्षितिरेणुदिग्धं
सारङ्गकण्डूयनशारमङ्गम् ॥ 20

समं कुरङ्गैः पदशब्दभीतैः
स्वयं च भीतः किल धावमानः ।
नाम स्वमुच्चैर्वदतो नृपस्य
कृतानुयानस्य पुरस्स तस्थौ ॥ 21

योगेन मुक्तादमुना शरीरा
ज्ज्योतिर्मयेनाविशता नरेन्द्रः ।
अयुज्यतांशेन निजेन धर्मो
राकामुखे चन्द्र इवान्तिमेन ॥ 22

कृशानुसात्कर्तुमनास्तदङ्गं
निवारितो व्योम्नि गिरा स्फुरन्त्या ।
युधिष्ठिरः प्राप्य तपोवनं त
च्चित्रं पितृव्याय शशंस वृत्तम् ॥ 23

द्वैपायनः प्राप्य मुनिः कदाचित्
प्रज्ञादृशं प्राञ्जलिमन्तिकस्थम् ।
स्पृशन्करेण कृशिमास्पदांश
मुवाच कृच्छ्रादमुमुज्जिहीर्षुः ॥ 24

बिभर्षि राजर्षिवरेण्य नूनं
समाधिविघ्नं कमपि त्वमाधिम् ।
नचेत्त्वमेवं तपसैव शुष्ये
न्नागायुतप्राणभृतस्तवाङ्गम् ॥ 25

आचक्ष्व तस्य प्रतिकारमाशु
ध्रुवं विधास्यामि शपे तपोभिः ।
किं नाम लोकत्रितये महिम्ना
तपस्विनां दुष्करमस्ति किंचित् ॥ 26

अथोपगूढस्य शुचा महत्या
विज्ञाय भावं मनसा स्वभर्तुः ।
जगाद गान्धारसुताऽऽर्द्रयन्ती
बाष्पाम्भसा नेत्रदुकूलपट्टम् ॥ 27

अयं सुतस्ते भगवन्वचोभि
राश्वास्यमानोऽपि भवद्विधानाम् ।
अद्यापि नैवोज्झति पुत्रशोकं
शोषप्रदं सिन्धुरिवौर्वमग्निम् ॥ 28

जपापदेशाद्गणयत्यजस्रं
नामान्ययं केवलमात्मजानाम् ।
शुभानि च ध्यानमिषेण तेषां
विभावयत्याननपङ्कजानि ॥ 29

पूजासमाप्तौ पुरशासितारं
वरं वृणीते भगवन्तमेवम् ।
अमुत्र वा देव मुहूर्तमात्रं
पुष्णातु मां पुत्रशतस्य योगः ॥ 30

गुरुश्च बन्धुश्च परं च दैवं
त्वमेव नः कल्पितसन्निधानः ।
प्रकाश्यतां पुत्रशतस्य राज्ञो
मनोरथं पूरयितुं प्रसादः ॥ 31

स तामवादीन्मुनिरद्य यूयं
भागीरथीतीरभुवं भजध्वम् ।
तत्रोपनेष्यामि शतं सुताना
मन्यांश्च जन्येषु हतानशेषान् ॥ 32

तथेति तस्य प्रतिगृह्य वाचं
दिदृक्षुराश्चर्यमदृष्टपूर्वम् ।
त्रिस्रोतसस्तीरभुवि क्षितीश
श्चकार वासं सहबन्धुपौरैः ॥ 33

दिव्यस्तपस्वी दिवसे परस्मि
न्निमज्ज्य पुण्याम्भसि निम्नगायाः ।
ये ये हतास्स्वर्गनिवासभाज
स्तांस्तानशेषानयमाजुहाव ॥ 34

उत्तूलपाथःप्रसराद्द्युसिन्धो
रुद्भ्रान्तनक्रादुदरादुदीर्णः ।
ः बृंहितहेषितसिंहनादः
कोलाहलः कोऽपि जगाज्जगाहे ॥ 35

आच्छादयन्फेननिभानि गङ्गां
पूर्वं पताकापटपल्लवानि ।
कुन्तास्ततो नीलसरोजशोभा
श्छत्राणि पश्चात्सदृशानि पद्मैः ॥ 36

अष्टादशानामधिकां विभूति
मक्षौहिणीनामवलोकयन्तः ।
उत्तस्थुरुर्वीपतयः प्रवाहा
दुत्सृज्य वैराण्युभयत्र वीराः ॥ 37

अथाम्बिकेयस्सुबलात्मजा च
तपोबलात्तस्य मुनेरवाप्ता ।
दिव्यां दृशं पुत्रशतं सपौत्रं
बन्धुव्रजं सम्मदविस्मयौ च ॥ 38

प्रभूतया बन्धुतया समेता
दिवोवतीर्णा जनता विरेजे ।
सविस्मयं सर्वसुपर्वदृष्टा
भागीरथीवेतरसिन्धुपङ्क्त्या ॥ 39

ऋषिप्रभावोपनतेषु सर्वे
निर्विश्य हर्म्येषु निशां वधूभिः ।
सहैव ताभिर्विरहासहाभि
र्यथागतं जग्मुरमी विभाते ॥ 40

आपृच्छ्य तस्मिन्नपनीतशोके
तिरोहिते दिव्यमुनौ नरेन्द्रः ।
सहोमधूमं पदमाप कश्चित्
प्रभूतकालागुरुधूममन्यः ॥ 41

तपोविशेषेण कृशं कदाचित्
पत्न्या च भोजात्मजया च सार्धम् ।
ददाह वन्यो धृतराष्ट्रमग्नि
र्द्रुमं लताभ्यामिव धर्मदूनम् ॥ 42

श्रुत्वा मुनिभ्यस्तदुदन्तमन्तः
शोकानलेन प्रभुरात्तगन्धः ।
यथाविधि भ्रातृयुतो वितेने
निवापतोयाञ्जलिनिर्वृतांस्तान् ॥ 43

अथैकदा नारदकौशिकादीन्
दिव्यानृषीन्द्वारवतीं प्रपन्नान् ।
स्त्रीवेषभाजं प्रणमय्य साम्ब
ममूनपृच्छन्युयुधानमुख्याः ॥ 44

भूतं च भव्यं च भवच्च सर्व
मेतद्भवद्भिर्विदितं महद्भिः ।
तत्कथ्यतां वृष्णिवरस्य बभ्रो
र्वधूरपत्यं किमियं सवित्री ॥ 45

तैर्विप्रलब्धा मुनयो मदान्धै
रमर्षकम्पाधरमेवमूचुः ।
अमुष्य गर्भान्मुसलः प्रसूतो
युष्मत्कुलं नेष्यति सर्वमन्तम् ॥ 46

शप्त्वैवमन्तर्हितवत्सु तेषु
क्षणादयोदण्डमसूत साम्बः ।
अन्ये तु सम्भ्रान्तधियस्तमाशु
न्यवेदयन्यादवनायकाय ॥ 47

शापं मुनीनां समयोपपन्न
मीशोऽपि संहर्तुमुपेक्षमाणः ।
सञ्चूर्ण्य सम्यक्किल शौरिरब्धौ
प्राक्षेपयत्तं मुसलं नियोज्यैः ॥ 48

ध्रुवं निजोपद्रवशङ्कितेन
क्षिप्तं समुद्रेण बहिस्तरङ्गैः ।
कूलं प्रपन्नः क्वचिदायसोऽयं
क्षोदोऽभवत्काननमेरकाणाम् ॥ 49

मुक्तं च सिन्धौ मुसलस्य शेषं
जालाहृतोत्कृत्तझषोदरास्यम् ।
निशातमेको निजसायकस्य
व्याधः प्रहृष्टो वितताम शल्यम् ॥ 50

दिवं प्रयातेषु निजायुधेषु
प्रभासयात्रामपदिश्य शौरिः ।
क्षयं निनीषुर्निखिलांश्च बन्धू
न्निनाय नीराकरतीरभूमिम् ॥ 51

पात्रैस्सरोजैरिव शीधुपूर्णै
रलङ्कृतां केसरगन्धगर्भैः ।
आपानभूमिं नलिनीमिवारा
द्भृङ्गा इवापुर्यदवोऽङ्गनाभिः ॥ 52

कंसारि रंसाहितरक्तमाल्यां
सदाडिमीपुष्पमयावतंसान् ।
मुखैश्च कश्मीरविशेषकाङ्कै
रमंस्त वृष्णीन्कृतवध्यचिह्नान् ॥ 53

मध्ये सभाया मधुपात्रहस्ता
मदोद्धतास्तालल यानुकूलम् ।
नतभ्रुवो नर्तयतां यदूना
मापानमासीदवलोकनीयम् ॥ 54

रागं दृशोरारचयन्क्रमेण
स्खलद्वचोभंगिरुदीर्णहासः ।
हनिष्यतां हन्त परस्परेण
तेषां मधो रोष इवाविरासीत् ॥ 55

मदोद्धताः स्वैरमधिक्षिपन्तः
समत्सराहङ्कृतयो रुषान्धाः ।
शस्त्रीकृताभिर्द्रुतमेरकाभि
र्मिथो हतास्ते यदवो बभूवुः ॥ 56

दृष्ट्वा विरक्तो निजवंशनाश
माद्यस्य पुंसः प्रथमांशभूतः ।
हली च वेलाभुवि योगयुक्ता
दात्मानमुन्मोचयति स्म देहात् ॥ 57

नीहारशैलादिव तच्छरीरा
द्दरीनिभव्यात्तमुखादुदीर्णः ।
शेषस्सहस्रेण मुखैर्जगाहे
भागीरथीपूर इवाम्बुराशिम् ॥ 58

ततो हरिर्मध्यमलोकवर्ती
चिरं विमुक्तां दिवमारुरुक्षुः ।
निक्षिप्तमुष्णांशुमिव प्रभाते
धनञ्जयादाहरतिस्म तेजः ॥ 59

स्वेनोज्झितां द्वारवतीं समुद्रः
पुरा रुणद्धीति ततस्सपौरान् ।
आनाययिष्यन्भुवमर्जुनेन
तदन्तिकं दारुकमुत्ससर्ज ॥ 60

क्वचिद्वनान्ते वनदेवताभि
स्तल्पं तमालच्छदभङ्गक्लृप्तम् ।
सयोगनिद्रो हरिरध्य शेते
पत्रं वटस्येव पयोधिपूरे ॥ 61

व्याधस्तदा तच्चरणं शरेण
विव्याध दूरे मृगशङ्कितचेताः ।
स तेन भिन्नस्सुतरां बभासे
विभाकरस्येव करेण पद्मः ॥ 62

धारी च चापं स्वभुजैश्चतुर्भि
रुद्भासमानं धृतदिव्यशस्त्रैः ।
तमुन्मिषत्कौस्तुभरत्नभासं
ददर्श पीताम्बरमम्बुजाक्षम् ॥ 63

उत्खाय बाणं परिमृष्टरक्तं
पदारविन्दं शिरसा दधानः ।
अज्ञातक्लृप्तं तु ममापराधं
क्षमस्व देवेति जगाद भीतः ॥ 64

शरापदेशेन मुनीन्द्रशापो
मामस्पृशन्मा भयमुद्वहेति ।
आश्वासितं तं विससर्ज विष्णु
रन्ते पदं प्रापयिता परार्ध्यम् ॥ 65

भारावताराय वसुन्धरायाः
स्वां मूर्तिमङ्गीकृतवान् मुरारिः ।
तां षोडशान्तःपुरिकासहस्रै
र्निविष्टलावण्यसुधां मुमोच ॥ 66

अथानुभूतामरपुष्पवृष्टि
रारुह्य नागान्तकसोपवाह्यम् ।
दिक्पालसेवाञ्जलिदन्तुरेण
पथा निजं धाम जगाम देवः ॥ 67

द्यां पारिजातद्रुमवत्प्रपन्न
मशक्नुवत्यस्तमनुप्रयातुम् ।
सहस्रशो भृङ्ग्य इवार्तनादैः
पूर्णां व्यधुर्द्वारवतीं पुरन्ध्र्यः ॥ 68

ततो विषण्णस्सह दारुकेण
पुरं यदूनां पुरुहूतसूनुः ।
प्रागेव तोयाक्रमणात्पयोधेः
पौरास्रपूराप्लुतमाससाद ॥ 69

सभां सुधर्मामवगाह्य तां तु
गुहामिवाद्रेर्हरिणा वियुक्ताम् ।
स वृष्णिवृद्धैः परिवार्यमाणः
शुचं समस्तम्भयदात्तधैर्यः ॥ 70

अनेकभेदं यदुरत्नराशिं
कालेन सर्वं हरता क्षणेन ।
अलक्षितं वीक्ष्य सवज्रमेकं
प्रसाधकं भूवलयस्य मेने ॥ 71

स हास्तिकारोपितकोशजातः
परेद्युरुच्चारितपौरलोकः ।
यानाधिरूढैर्यदुवीरदारै
रन्वीयमानः स्वपुरं प्रतस्थे ॥ 72

क्रमेण वेलाभुवमागतेन
सविस्मयं पौरजनेन दृष्टः ।
पुरं जगाहे जलराशिपूर
स्तदीयसौन्दर्यदिदृक्षयेव ॥ 73

प्रतिप्रयाणं सुलभोदकेषु
मार्गे लतामण्टपमन्दिरेषु ।
सुखं वसन्तो विपिनेषु पौरा
विसस्मरुर्द्वारवतीनिवासम् ॥ 74

स्त्रीबालशेषं पथि वृष्णिचक्रं
धनुष्मतः पश्यत एव जिष्णोः ।
रुरोध रोधोभृतशृङ्गघोषा
धनानि लिप्सुः प्रतियोधसेना ॥ 75

शिलाकरासारमुचां समन्तात्
मलिम्लुचानां नदता गणेन ।
आचुक्रुशुः फल्गुन फल्गुनेति
सर्वेऽपि वित्तेषु बलाद्धृतेषु ॥ 76

अनेकराजन्यपुराहृतं त
दनर्घमासीच्चिरमात्मगुप्तम् ।
चोरा युवानः प्रसभेन जह्रु
र्धनं यदूनामवरोधनं च ॥ 77

धनञ्जयस्तावदुपेत्य वीरो
धनुः कथंचिन्नमयाञ्चकार ।
शिरस्तदीयं त्रिजगत्युदग्रं
व्रीडाभरेण स्वत एव नम्रम् ॥ 78

अस्त्रेषु हन्त स्मृतिदूरगेषु
स केवलैरेव शरैर्विषण्णः ।
पिनद्धमौलीनि शिरांसि पिञ्छै
स्स दन्तपत्राण्यलुनादरीणाम् ॥ 79

निषङ्गयुग्मेऽपि पृषत्कशून्ये
चापेन हंसानिव वारिवाहः ।
पर्यस्तलोष्टान्परितो वनेषु
बीभत्सुरुत्सारयति स्म दस्यून् ॥ 80

ततः पुलिन्दापहृतावशिष्टं
स्त्रैणं हरिप्रस्थमसौ निनाय ।
चोलेषु कुल्याहृततोयमोघं
घनागमस्सह्यभुवो यथाब्धिम् ॥ 81

सवज्रमस्मिन्नधिकर्द्धिभूमौ
शूरस्य सन्तानतरोः प्ररोहम् ।
नवाभिषेकाधिकरूढमूलं
विधाय राज्ञस्सविधं जगाम ॥ 82

कृष्णे गते जीवितमुक्ततृष्णाः
पञ्चापि पत्न्या सह पाण्डुपुत्राः ।
प्रस्थानमुर्व्यां महदाचरन्तो
देहान्विहातुं समयं वितेनुः ॥ 83

परीक्षितश्चक्रुरनन्तरं ते
राज्याभिषेकाम्बुभिरार्द्रमूर्तिम् ।
वल्कानि वासांसि ततो वसाना
बाष्पाम्बुवर्षेण च पौरलोकम् ॥ 84

वृकोदराद्यैरनुजैः क्रमेण
पत्न्या च केनापि शुनानुयातः ।
प्रदक्षिणीकर्तुमना धरित्रीं
प्राचीं नरेन्द्रः प्रथमं प्रतस्थे ॥ 85

सशक्रचापध्वजपङ्कजानि
मनःपदैश्शुद्धतरीकृतानि ।
पदानि तेषां पथि पाण्डवानां
सिद्धा निबद्धाञ्जलयः प्रणेमुः ॥ 86

अश्रान्तमाक्रान्तमहीभृतस्ते
निस्तीर्णनानाविधवाहिनीकाः ।
यात्रां पुनर्दिग्विजिगीषयेव
कुत्राप्यकुण्ठप्रसरां वितेनुः ॥ 87

मूर्ताय मार्गे स निषङ्गयुग्मं
कृशानवे गाण्डिवमर्पयित्वा ।
ततः पथैनैव पयोनिधीनां
प्राचीमवाचीं प्रययुः प्रतीचीम् ॥ 88

उदङ्मुखास्ते तदनु प्रयान्तो
विलङ्घ्य पुण्यानि वनस्थलानि ।
स्रोतःपरीतं सुरनिम्नगाया
हैमं च शैलप्रवरं व्यतीयुः ॥

अथोपवासव्रतकर्शिताङ्गी
पपात पूर्वं पथि याज्ञसेनी ।
ततो यमौ शक्रसुतश्च पश्चा
दनन्तरं सोऽपि समीरसूनुः ॥ 90

तेषां क्रमात्स्वस्य च पातहेतुं
भीमेन पृष्टो नृपतिश्शशंस ।
पार्थातिसक्ति मतिरूपगर्वौ
राज्ञामवाज्ञाममिताशितां च ॥ 91

सार्धं शुनैवानुगतेन यान्तं
शुभंयुचारित्रमजातशत्रुम् ।
अवोचदग्रे नमुचे र्विजेता
रथेन मार्गे कृतसन्निधानः ॥ 92

श्वानं नृप स्वर्गतिविघ्नमेनं
सन्त्यज्य यानेन दिवं भजेथाः ।
ततोऽनुजांश्चित्रपदापदानान्
दिव्याकृतीन्द्रक्ष्यसि पार्षतीं च ॥ 93

स चैनमाचष्ट चिराश्रितेन
शुना शुनासीर विनामुना मे ।
न रोचते नाकविहारसौख्यं
श्लाघ्यं परभ्रातृसमागमो वा ॥ 94

विहाय कौलेयकरूपमग्रे
मूर्तेन धर्मेण सह क्षितीशः ।
आरोपितो मातलिचोदिताश्वं
रथं मघोना दिवमारुरोह ॥ 95

आन्दोलयन्नभ्रनदीतरङ्गा
न्मदोदयो नन्दनगन्धवाहः ।
नृपाय कल्पद्रुमपुष्पगन्ध
मुपायनत्वं गमयाम्बभूव ॥ 96

पाञ्चाल्या सममुत्थितैर्निरयतः कर्णादिभिर्भ्रातृभिः
स्वं स्वं धाम गतैरभिष्टुतयशो दिव्यैश्च तैर्भ्रातृभिः ।
सिन्धोर्दिग्गजदानदिग्धपयसि त्यक्त्वावपुर्मानुषं
सर्वासां दिवषद्दृशां स विदधे शर्माणि धर्माकृतिः ॥ 97

इत्यगस्त्यपण्डितकृतौ बालभारते महाकाव्ये
विंशतितमः सर्गः

बालभारतमहाकाव्यं संपूर्णम

# INDEX